# वैखानसगृह्यसूत्रम्
# वैखानसधर्मसूत्रं च

[ वैखानसस्मार्तसूत्रम् ]

सम्पादकः
डॉ० डब्ल्यू० कैलेण्ड

मेहरचन्द लछमनदास पब्लिकेशन्स,
नई दिल्ली ११० ००२

# VAIKHĀNASAGṚHYASŪTRAM

AND

# VAIKHĀNASADHARMASŪTRAM

[VAIKHĀNASASMĀRTASŪTRAM]

THE DOMESTIC RULES OF THE VAIKHĀNASA SCHOOL
BELONGING TO THE BLACK YAJURVEDA

*Critically edited*
*by*
**Dr. W. CALAND**

Meharchand Lachhmandas Publications
New Delhi 110 002

# PREFACE.

This critical edition of the Gṛhya and Dharmasūtra[1] of the School of the Vaikhānasas, which together may be designated as their Smārtasūtra, is based on the following materials.

1. *Ma*, a copy, in Telugu characters like its original, of a manuscript belonging to the Government Oriental MSS. Library, described in 'a Triennial Catalogue of Manuscripts collected for the Government Oriental MSS. Library at Madras,' Vol. II, Part I, Sanskrit C, number 1605 (page 2262). The whole of this manuscript, which contains also the Śrautasūtra, was copied for me, with the exception of the Dharma and Pravara sūtras.

2. *Bh*, a copy, equally in Telugu, of the Bhāṣya on the Gṛhya and Dharmasūtra, composed by Nṛsiṃhāgnicit,[2] son of Mādhavācārya, described in the same Catalogue under number 1609 (page 2271). This manuscript contains the bhāṣya on the first nine Praśnas; the bhāṣya on the last Dharmapraśna is wanting.

3. *Vi*, the manuscript belonging to the Library of the University of Vienna (Ms. 311), a copy made for Professor Bühler from a Mysore manuscript.

4. *My*, a copy in Devanāgarī made for me from a Grantha manuscript in Mysore, described in 'Catalogue of Sanskrit Manuscripts in the Government Oriental Library of Mysore' (1900), page 29, No., 1359.

5. *Ed*, viz. the Kumbakoṇam edition of 1914 entitled: 'śrīvaikhānasagṛhyasūtram dharmasūtrapravarasūtrasahitam' by Nārāyaṇa Bhaṭṭacārya. As this edition is out of print and very difficult to obtain and, moreover, printed in Grantha

---

1 The Pravarasūtra, a list of proper names which agrees closely with that of Āpastamba, has been left aside.

2 The author calls himself also Nṛsiṃhavājapeya and Vājapeyakṛt or Nṛsiṃhavājapeyabhaṭṭācārya.

character, a new edition seemed not to be superfluous, the more so, as the Kumbakoṇam edition, though in the main a good piece of work, gives no variant readings. But, as will be seen from our present edition, the tradition of this Vaikhānasa text is by no means without its discrepancies and moot points. So I have considered this printed text as a manuscript, though a fairly correct one.

These are the five sources on which our text is principally based. For the Dharmasūtra alone we have:

6. *Tri*, the Trivandrum edition of 1913 prepared by T. Gaṇapati Śāstrī.

Of more or less use for the constitution of the text were the following works:—

(*a*) The Vaikhānasagṛhyaprayogavṛtti (cited by me as 'Prayoga') by Sundararāja, a copy made in the original Telugu from a manuscript belonging to the Government Library of Madras, described under No. 1610 of the Triennial Catalogue of Manuscripts, Vol. II, Part I, Sanskrit C, page 2272.

(*b*) The Vaikhānasasūtradarpaṇa (cited by me as 'Darpaṇa') by Nṛsiṃhavājapeyayājin son of Mādhavācārya (obviously the author of the Bhāṣya) 'a handbook of rites in accordance with the Vaikhānasagṛhyasūtra' printed at Kumbakoṇam in 1915 in Telugu characters. This Darpaṇa treats only of the materials contained in the Gṛhyasūtra up to the end of the third Praśna. The author follows the Sūtra passage by passage. His division of the text differs from the one which is found in our manuscripts; he divides not into khaṇḍas but into prakaraṇas, each prakaraṇa containing more than one khaṇḍa.

It was hitherto unknown, that our Vaikhānasagṛhyasūtra presupposes, in the same way as do the Āpastamba-, the

Gobhila- and the Kāṭhakagṛhyasūtra, a separate collection of Mantras. Without this collection of Mantras the Sūtra is only partly intelligible. Fortunately this book of Mantras has been preserved. A part of it has been printed under the title 'Vaikhānasamantrapraśnaḥ sasvaraḥ praśnacatuṣṭayātmakaḥ: a Vedic lectionary in 4 praśnas for the ritual of the Vaikhānasa school of the Taittirīyas,' edited in Grantha characters at Kumbakoṇam in 1910 by Kṛṣṇabhaṭṭācārya and other Paṇḍits. It comprises the accented text of the first four praśnas and gives the Mantras for the first five books of the Gṛhyasūtra. I am in possession of a much more extensive copy of this text, viz., 'the Vaikhānasīyā mantrasaṃhitā' being a copy of No. 1359, belonging to the Government Oriental Library at Mysore, see 'Catalogue of Sanskrit Manuscripts in the Government Oriental Library, Mysore 1900, page 9. After the four praśnas contained in the edition of Kumbakoṇam, some more follow: praśna V in 23 adhyāyas, praśna VI in 14, praśna VII in 11, and of praśna VIII the first 26 adhyāyas. There is no designation that here the text is complete.

On the whole, the five sources on which our text is principally founded, can be divided into two groups: on the one hand the Madras manuscript of the text (Ma) and the bhāṣya (Bh) agree mostly, on the other hand the three: Vi, My and Ed., also agree closely with one another. Wherever Ma and Bh on the one hand, and Vi My Ed. on the other hand present the same readings, I have, for brevity's sake, designated these readings respectively as B and A.

Scholars, who would like to know something more about this Vaikhānasasūtra, are referred to the translation of the text, which is to appear shortly: in the Introduction to the translation some points connected with the Sūtra will be discussed.

UTRECHT,

*July, 1925.*

## ADDITIONAL NOTE TO THE PREFACE

After my manuscript of the Vaikhānasa text was despatched to the Press, I received through the kindness of Paṇḍit Bhagavaddatta, Research Scholar of the Dayānand Anglo-Vedic College at Lahore, one more manuscript (of the gṛhyasūtra only) for collation, viz. a copy in Devanāgarī of a manuscript belonging to the Adyār Library. I was in a position, during the printing, to mention in the critical notes the variant readings of this manuscript, which I designate as *La*. This Ms. occupies a somewhat intermediate position between the two groups A and B, now agreeing more with the one and then again with the other.

I avail myself of the opportunity to express my cordial thanks to Paṇḍit Bhagavaddatta for his assistance in procuring for me the loan of this manuscript.

*June*, 1926.

---

## CORRIGENDA.

Page 4, line 5 *read* ॰भिमुखमादित्यस्यार्धँ
Page 14, line 1 *read* ॰मूर्ध्वँ
Page 15, line 3 *read* ऊतं ; line 13 *read* ॰वारुणान्तं
Page 21, line 15 *read* ॰ग्निद्वत्याः । In note २ : परिवेष्य instead of परिष्य
Page 28, line 2 *read* वर्षेषु instead of वर्णेषु
Page 36, line 11 *read* पैशाचो
Page 39, line 2 *read* वाह्वारयन्निति
Page 45, line 12 *read* ह्रिरण्यपुष्प्रा
Page 47, line 14 *read* ॰द्दमग्नेरग्निं
Page 55, line 12 *read* ॰प्यायता-
Page 69, line 12 *read* ॰च्छ्रासो
Page 70, line 9 *read* ॰कुम्भेन
Page 73, line 2 *read* द्दति१ ; line 13 : वुद्धये
Page 75, line 6 *read* ॰जुह्वा ; line 9 : जुह्वं
Page 76, line 3 *read* ते instead of तै
Page 94, line 15 *read* वैष्णवा॰
Page 98, line 15 *read* सन्ध्यो॰
Page 108, line 1 *read* ॰दूर्ध्वँ
Page 120, line 14 *read* तत्सर्वं॰

# सूचीपत्रम् ।

# । वैखानसगृह्यसूत्रम् ।

अथ निषेकादिसंस्कारान्व्याख्यास्यामः । ऋतुसंगमनगर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मोत्थाननामकरणान्नप्राशनप्रवासागमनपिण्डवर्धनचौडकोपनयनपारायणव्रतबन्धविसर्गोपाकर्मसमावर्तनपाणिग्रहणानीत्यष्टादश संस्काराः शारीराः । यज्ञाश्च द्वाविंशत्[1] ब्रह्मयज्ञो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति[2] पञ्चानामहरहरनुष्ठानं । स्थालीपाक आग्रयणमष्टका पिण्डपितृयज्ञो मासिश्राद्धं चैत्र्याश्वयुजीति[3] सप्त पाकयज्ञाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणेष्टिश्चातुर्मास्यो[4] निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञाः । अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त सोमयज्ञा इत्येते चत्वारिंशद्भवन्ति । निषेकादा जातकात्संस्कृतायां ब्राह्मण्यां ब्राह्मणाज्जातमात्रः[5] पुत्रमात्र[5] । उपनीतः सावित्र्यध्ययनाद्ब्राह्मणो । वेदमधीत्य शारिरैरा पाणि-

---

१ द्वाविंशतिः Vi only.

२ Thus Ma ; मनुष्ययज्ञ इति Ed, Vi ; भूतयज्ञमनुष्ययज्ञाविति My.

३ ॰युज इति Vi, ॰युजो इति My.

४ Thus Ed La and originally Ma ; ॰मास्या Ma (correction) ; ॰मास्यः La Bh ; ॰मास्य Vi My.

५ Thus Ma and Bh ; ॰जातमात्रो मात्रः Ed La and My ; ॰जातमात्र Vi.

ग्रहणात्संस्कृतः पाकयज्ञैरपि यजन्श्रोत्रियः । स्वाध्यायपर[1] आहिताग्निर्हविर्यज्ञैरप्यनूचानः । सोमयज्ञैरपि भ्रूणः । संस्कारैरेतैरुपेतो नियमयमाभ्यामृषिकल्पः । साङ्गचतुर्वेदतपोयोगादृषिः । नारायणपरायणो निर्द्वन्द्वो मुनिरिति संस्कारविशेषात्पूर्वात्पूर्वात्परोवरीयानिति[2] विज्ञायते । ॥ १ ॥

अथ चातुराश्रमिणां स्नानविधिरभिषेकदिव्यवायव्याग्नेयगुर्वनुज्ञा[3] इति पञ्चधा भवति । नदीतटाककूपानामलाभे पूर्वस्योत्तरमुपतिष्ठेत । प्राङ्मुख उदङ्मुखो वाक्रम्य जलस्थलेष्वासीनः पाणिपादावा मणिबन्धजानुतो दक्षिणादि प्रत्येकं प्रक्षाल्याफेनावस्रावमविच्छिन्नमद्रुतमशब्दमबहिर्जानु[4] हृदयंगममुदकं गोकर्णवत्पाणिं कृत्वा ब्राह्मेण तीर्थेन त्रिराचम्य द्विरङ्गुष्ठमूलेनास्यं[5] परिमार्ज्याङ्गुष्ठस्याग्निः प्रदेशिन्या वायुर्मध्यमस्य[6] प्रजापतिरनामिकायाः[6] सूर्यः कनिष्ठिकस्येन्द्र[7] इत्यधिदेवता[8] भवन्त्यङ्गुष्ठमध्यमाभ्यां सर्वतीर्थैर्वा मुखं मार्ज्याङ्गुष्ठानामिकाभ्यां चक्षुषी अङ्गुष्ठप्रदेशिनीभ्यां नासिकामङ्गुष्ठकनिष्ठिकाभ्यां[9]

---

१ Thus Ma; ०परस्त्वाहिता० Vi, My, Ed.

२ पूर्वात् once only Ma.

३ ०षेकः दिव्यो वायव्य आग्नेयो गुर्वनुज्ञेति Ed.

४ ०फेनास्राव० Ma Ed; ०फेनावस्रा० Vi; ०फेनवस्रा My; the Bh. reads as Ma and Ed., but the explanation points to अपस्राव। Only La Vi My ०जानु, the other sources ०जानर्हृदयं०।

५ आस्यं om. A, La.

६ वायुः प्रजापतिर्मध्यमस्यानाः A, La.

७ कनिष्ठस्येन्द्र Vi My Bh La.

८ अधि om. Vi Ed La, the whole word अधिदेवता not in My.

९ नासिकां behind अङ्गुष्ठकनि० in A, La.

श्रोत्रे। भुजौ ताभ्यामङ्गुष्ठेन वा। हृदयमङ्गुलिभिर्नाभिं चाङ्गुष्ठेन प्रत्यङ्गमपस्सु स्पृष्ट्वा जङ्घयोर्वामे पाणावप्यभ्युक्ष्य[१] सर्वाभिर्मूर्धानं स्पृशतीन्द्रो ऽहमुभ्याभ्यामिति करावापः पादावस्मिन्कुल इति पादौ च तथा प्रक्षाल्यापः पुनन्त्विति पुनस्तथाचामति। ऋग्वेदः प्रीणातु यजुर्वेदः प्रीणातु सामवेदः प्रीणात्विति त्रिरपः पीत्वाथर्ववेदः प्रीणात्वितिहासवेदः प्रीणातु चन्द्रमाः प्रीणात्विति त्रिधा मुखं[२] मार्ष्टि। महेश्वरः प्रीणात्विति मूर्धानमादित्यः प्रीणातु सोमः प्रीणात्विति चक्षुषी दिशः प्रीणन्त्विति श्रोत्रे वायुः प्रीणात्विति नासिकामिन्द्रः प्रीणात्विति भुजौ विष्णुः प्रीणात्विति हृदयमग्निः प्रीणात्विति नाभिं। स्पृशतीत्येके। ॥ २ ॥

अथापो नमस्कृत्यावगाह्य यावदमनश्शङ्कमद्भिर्मृदा च गात्रशुद्धिं कृत्वा वरुणमा दशात्सूदितमिति नेनेक्ति गायत्र्या प्रागग्रिकमुदगग्रिकं[३] वास्तृणाति। शुष्के तथैव गृह्णीयादिदमापः प्रवहतेत्यभिगम्य हिरण्यशृङ्गमिति जलं[४] प्रणम्य समृदोदकेनापः पुनात्वित्यभ्युक्ष्येदमापः शिवा इत्यपो विगाह्य सुस्नातीदं ब्रह्म पुनीमह इति पवित्रं गृहीत्वा ब्रह्म पुनात्वित्यञ्जल्यां निक्षिप्य शतधारमिति जलं गृहीत्वा[५] पयस्वती-

---

१ चपि om. Vi My.

२ A La om.

३ ०ग्रि० both times Ma Ed La Vi Bh, ०ग्र० My only.

४ A La om.

५ Ma ins. ऊर्ध्वपुण्ड्रं ललाटे धारयन्।

रोषधय इत्याचम्य भूरग्नय इत्युपस्थानमादित्यस्य चित्पतिरिति त्रिभिरनामिकोपान्ताभ्यां सम्मृदोदकेन त्रिः प्रदक्षिणमावर्त्य शिरो मार्ज्यापोहिरण्यपवमानैः प्रोक्षयत्युद्वयमित्यादिनादित्यमुपस्थाय[1] महाव्याहृत्या जलमभिमन्त्र्य कर्णावपिधायाभिमुखमादित्यार्धे[2] निमज्ज्य ऋतं च सत्यं च यास्तु गन्धा इति त्रिरावर्तयन्नघमर्षणं करोति। ततो मन्दं निःश्वस्य धौतं परिधायानुपमृज्य वासः प्रातः सूर्यश्चेत्यादिनाचम्यापोहिष्ठादिभिर्ऋग्भिस्तिसृभिः प्रोक्ष्य गायत्र्यापोऽभिमन्त्र्यादित्याभिमुखं विक्षिप्य प्रदक्षिणं करोति। प्राणायाममेकावरं[3] कृत्वाष्टावरां[4] सावित्रीमभ्यस्य मित्रस्येत्यादिभिर्ऋग्भिस्तिसृभिस्तिष्ठन्सन्ध्यामुपासीत। मध्याह्ने आपः पुनन्त्वित्याचम्य[5] तथा[6] प्रोक्ष्योद्वयमित्यादिभिर्यजुर्भिस्तिष्ठन्नादित्यमुपस्थाय[7] तथा करोति। सायमग्निश्चेत्यादिनाचम्य तथा प्रोक्ष्य यच्चिद्धीत्यादिभिः सामभिरुपास्यासीनस्तथा करोत्युदितार्कां पश्चिमार्कामिति च सन्ध्ये यथादिशं तन्नामादिना दिग्देवताः पितॄन्सापसव्यं ब्रह्माणं चोदङ्मुखो नारायणादीन्नमोऽन्तेनोपतिष्ठेत। ॥ ३ ॥

---

१ प्रोक्ष्य instead of प्रोक्षयति La Vi My.
२ कर्णौ पिधाय Ma Bh, कर्णावभिधाय Vi My.
३ एकवरं Bh, Vi.
४ अष्टवरां Bh; अष्टावरान् Vi My La.
५ Thus Vi My Bh; पुनन्त्वित्यादिना Ma Ed.
६ My om.
७ After यजुर्भिः A La ins. तिसृभिः (!).

अथाचम्य कौरुक्षेत्रमिति जलं नमस्कृत्य महाव्याहृत्या जलमभिमन्त्र्य हस्तेन तत्तीर्थक्रमेण कूप्याभ्यः स्वाहेत्यादिभिस्तर्पयति[१] भूपतिं तर्पयामि भुवनपतिं तर्पयामि भूतानां पतिं तर्पयामि प्रजापतिं तर्पयामि ब्रह्माणं तर्पयामि नारायणं तर्पयामि महादेवं तर्पयामि स्कन्दं तर्पयामि विनायकं[२] तर्पयामि । यथादिशं तन्नामादिना दिग्देवतास्तर्पयतीन्द्रं तर्पयामि यमं तर्पयामि वरुणं तर्पयामि कुबेरं तर्पयाम्यग्निं तर्पयामि निर्ऋतिं तर्पयामि वायुं तर्पयामीशानं तर्पयाम्यादित्यं[३] तर्पयामि सोमं[३] तर्पयाम्यङ्गारकं तर्पयामि बुधं तर्पयामि बृहस्पतिं तर्पयामि शुक्रं तर्पयामि शनैश्चरं तर्पयामि राहुं तर्पयामि केतुं तर्पयामि ग्रहाꣳस्तर्पयामि[४] । नक्षत्राणि तर्पयामि ताराꣳस्तर्पयामि विश्वान्देवाꣳस्तर्पयामि सर्वाश्च देवतास्तर्पयामि वेदाꣳस्तर्पयामि यज्ञाꣳस्तर्पयामि छन्दाꣳसि तर्पयामि । स्वगोत्रादिसप्तर्षीꣳस्तर्पयति विश्वामित्रं[५]

---

१ आदिभिः om. Ma.

२ Thus A La, where, however, we find before विनायकं त॰ the words विघ्नं त॰ (found in the printed text of the Saṃhitā, not in the grantha copy of it). In Ma the passage from स्कन्दं त॰ on up to इन्द्रं त॰ (incl.) is omitted.

३ Of the planets Āditya and Soma occur only in A.

४ The anunāsikā throughout (in passages cited from the Saṃhitā) in Ma alone, the others present the anusvāra.

५ Before विश्वा॰ the text of Vi La and Ma and the two recensions of the Saṃhitā ins. विखनसं त॰, but cp. IX. 13; Ed puts these words into brackets.

तर्पयामि जमदग्निं तर्पयामि भरद्वाजं तर्पयामि गौतमं तर्पयाम्यत्रिं तर्पयामि वसिष्ठं तर्पयामि कश्यपं तर्पयामि भृगुं तर्पयामि[१] सर्वानृषींस्तर्पयामि सर्वा ऋषिपत्नीस्तर्पयामि। प्राचीनावीती पित्र्याणि करोति। ऊर्म्योदकान्त इति पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो ज्ञातिवर्गेभ्यः पितृपत्नीभ्यः पितामहपत्नीभ्यः प्रपितामहपत्नीभ्यो ज्ञातिवर्गपत्नीभ्यः स्वधा नमस्तर्पयामीति तर्पयति[२]। अथ निवीती भौमांस्तर्पयामि भौमदिव्यांस्तर्पयामि नागांस्तर्पयामि नागदिव्यांस्तर्पयामि यावन्तो जलार्थिनस्तावन्तः प्रतिगृह्णन्त्वित्यपो विसृज्याचम्य ब्रह्मयज्ञं करोति। शुद्धे देशे बर्हिरास्तीर्य ब्राह्ममासनमास्थाय[३] पवित्रपाणिर्ब्रह्माञ्जलिं कृत्वा प्राङ्मुखः सावित्रीपूर्वं नित्यमिषे त्वोर्जे त्वेत्यादि यथाकामं। नैमित्तिकमृतं च सत्यं च देवकृतस्य यन्मे गर्भे तरत्स मन्दी वसोः पवित्रं जातवेदसे विष्णोर्नु कं सहस्रशीर्षैकाचरमा त्वाहार्षं त्वमग्ने पवस्वादीन्स्वाध्यायमधीयीत सौरीभिर्ऋग्भिर्यथाकाममादित्यं चोपतिष्ठेत। ॥ ४ ॥

अशक्तो नित्यं पादौ प्रक्षाल्याचम्य अतो देवादि वैष्णव जप्त्वा दिव्यं वायव्यमाग्नेयं मन्त्रस्नानं वा कृत्वा पूर्ववदाचमन,-

१ After भृगुं त० Ed ins. into brackets अगस्त्यं त०, remarking अगस्त्यस्य ग्रहणं गोत्रप्रवरे दृश्यमानत्वात्। Some of the MSS. write भारद्वाज and काश्यप।

२ Ma om. इति तर्पयति।

३ Here and throughout B ब्राह्म०।

दौनि कुर्याद्दिवच्युतैर्गाङ्गेयैराधावैः स्नातपैर्वर्षैर्वासेचनं दिव्यं । गवां पादोद्धतैर्वायुनीतैः पांसुभिः स्पर्शनं वायव्यं । भस्मना शुद्धेन सर्वाङ्गमालेपनमाग्नेयमापो हि ष्ठेति मन्त्रेणाग्नेयेन तीर्थेनाभ्युक्षणं मन्त्रस्नानं । दक्षिणपाणेर्मध्यतलमाग्नेयं[1] तीर्थं कनिष्ठाङ्गुलिमूलं[2] दैवं[3] सर्वाङ्गुलिमूलाग्रमार्षं प्रदेशिन्यङ्गुष्ठयोर्मध्यं पैतृकमङ्गुष्ठस्य मूलं ब्राह्मं । दैवेन तीर्थेनोपवीती दैविकं कार्यमार्षेणार्षं । पैतृकेण पित्र्यं । सर्वं ब्राह्मेण ब्रह्मतर्पणमाचमनमाग्नेयेन[4] तीर्थेनाभ्युक्षणं करोति । दक्षिणहस्तमुद्धृत्योपवीतं धारयेदुपवीती वाममुद्धृत्य प्राचीनावीती कण्ठसक्ते[5] निवीती भवति । स्नात्वा पुण्ये ऽहनि संस्कारहोमं जुहुयादिति विज्ञायते । ॥ ५ ॥

अथ पुण्याहं । पञ्चावरान्श्रोत्रियानाहूयाभिपूजयत्याचार्यः करकं धारास्वित्यद्भिरापूर्येदमापः शिवा इत्यपो ऽभिमन्त्र्य पुष्पाद्यैः[6] सर्वतीर्थजलमित्यभ्यर्च्य प्रतिवाचकान् प्राङ्मुखानुदङ्मुखान्वा स्थापयित्वोदङ्मुखः सुपुण्याहं[7] करोमीति संकल्प्य स्वस्ति सुप्रोक्षितमस्त्विति स्थानं प्रोक्ष्य[8] प्रजापतिः प्रियतामित्युक्त्वा

---

१ मध्यं तल० A La.

२ ०ङ्गुलेर्मूलं Ma.

३ दिव्यं A La.

४ Before आग्नेयेन A La ins. आपो हिष्ठेतिमन्त्रेण ।

५ कण्ठे सक्ते B; ०सक्तं Ed only.

६ ०ादिभिः A La.

७ Before सुपु० La Vi and My ins. स्थितः करकं बाहुमात्रमुद्धृत्य, which reading is mentioned in Ed in a footnote (बाहुमात्रमुद्धृत्य करकं).

८ संप्रोक्ष्य Ma.

तैः प्रियतामिति वाचयति । शाम्यन्तु घोराणीत्युत्तरान्तं शिरपः स्रावयति । अतो देवा इत्ययं दैविके मं त्वा सिञ्चामीत्ययं सूतके शुची वो हव्येत्ययं प्रेतके द्रविणोदाः सविता नवो नवो विद्युच्छतं जीवाष्टौ देवा हिरण्यरूप ऋध्याम सोममाहार्षं त्वार्यमणं सोमं राजानमिन्द्रावरुणा श्रिये जातो या गुङ्गुर्यस्त्वा हृदा यस्मै त्वं नर्यं प्रजां सुत्रामाणं शतायुधाय दक्षिणावतां भद्रं कर्णेभिः शतमिन्न्वदितिर्द्यौरित्यृत्विजः सर्वे वदेयुः । ॥ ६ ॥

देवा ऋषयः पितरो ग्रहा देव्य ऋषिपत्न्यः पितृपत्न्यो वेदा यज्ञाश्च सर्वाद्याः प्रियन्तामन्तः प्रतिवचनं । पुण्याहं शिवमायुष्यमरोग्यमविघ्नमचलमैश्वर्यं यत्पापं तत्प्रतिहतं यच्छ्रेयः शिवं कर्म शिवः पच इत्यस्त्वन्तास्तथान्तः[1] प्रतिवचनं । शिवा ऋतवः सन्तु शिवानि नक्षत्राणि भवन्तु सर्वकर्मसमृद्धिरस्तु सर्वधनधान्यसंपूर्णमस्त्वित्येकैकमुक्तवन्तः[2] प्रतिवचनं । यत्पुण्यं स्वस्ति न ऋध्यास्मेति पूर्वोक्तामितरेऽनुवदन्ति । यजमानस्य नक्षत्रनामादि गोत्रनाम सुतान्तं मातृगोत्रनामान्तात्परं शर्मान्तं नाम प्रणवादि भवन्तो ब्रुवन्तु पुण्याहं स्वस्त्यृद्ध्यन्तं प्रत्येकं त्रिधा त्रिधा यथाविभक्तिवाचितमनुवाचयेयुः । आपो हिरण्यपवमानैः प्रोक्षयति । पुण्याहे कृते तदहः पुण्यं भवत्यादावन्ते वा पुण्याहेन सर्वाः क्रियाः पुण्याः परिपूर्णा भवन्ति । स्वाहुतो

१ तथान्तं My Ed.

२ Thus Ma La Ed; उक्तावन्तः Vi My. R. prob. उक्तान्तः or with Vi and My उक्तावन्तः ।

ऽसीति दक्षिणाकालमुक्तवत्सु घृतात्परीत्यद्भिर्यथाशक्ति[1] दक्षिणां हस्तेन दक्षिणेन ददाति । त्वमग्ने यज्ञानाꣳ होतेति तदाददीरन्यच्च दक्षिणादानादाने तत्रैवं स्यादिति विज्ञायते । ॥ ७ ॥

अथाग्न्यायतनं । प्राक्प्रवणे वोत्तरप्रवणे वा शुद्धे देशे गोमयेनोपलिप्ते शुद्धाभिः सिकताभिः प्राक्पश्चिमं दक्षिणोत्तरं च द्वात्रिंशदङ्गुल्यायतं द्व्यङ्गुलोन्नतं यथालाभोन्नतं वा स्थण्डिलमग्न्यायतनं[2] भवति । परिस्तरणबर्हिषः प्रतिदिक् पञ्चदश स्थण्डिलप्रमाणाः । कुण्डे षट्त्रिंशदङ्गुलास्तथैकाङ्गुलिपरिणाहा व्रणवक्रहीनाः परिधयः । पञ्चदशदर्भैर्ग्रथितं चतुरङ्गुलाग्रं द्व्यङ्गुलग्रन्थि हस्तमात्रं प्रोक्षणकूर्चं । तथैव द्वादशाङ्गुलमात्रं पवित्रं । तत्प्रमाणा याज्ञिकाः समिधः । पात्रस्रुवादयो यज्ञे प्रोक्ता । दर्भेषु द्वन्द्वं पात्रादिसंभारानुत्तरे दैविके प्रत्येकं दक्षिणतः पैतृके संभरति । नित्यहोमे ऽग्निशालायां मृदा चतुर्दिशं द्वात्रिंशदङ्गुल्यायतां चतुरङ्गुलविस्तारां द्व्यङ्गुलोन्नतामूर्ध्ववेदिं चतुरङ्गुलिविस्तारोन्नतां तत्परिगतामधोवेदिं च मध्ये निम्नं षडङ्गुलमग्निकुण्डं कृत्वास्मिन्[3] गृहस्थो ऽग्निमौपासनमाधाय नित्यं जुहोति । वनस्थस्य श्रामणकाग्नेः कुण्डमाधानविशेषं च धर्मे वक्ष्यामः । ॥ ८ ॥

---

१ अद्भिः only in Ma and La, not mentioned in the Bh.

२ अग्न्यालयं A.

३ कृत्वा तस्मिन् Ma La only.

2

अथाघारविधानं । ब्राह्मं प्राङ्मुखमासीन[1] एतो[1] न्विन्द्रमित्यग्न्यालयं प्रोक्ष्य मयि देवा[2] इत्यादिभिश्चतुर्दिक्षु[2] दर्भानुच्चयेदुद्धन्यमानमिति मध्यपूर्वापरयमाग्निनिर्ऋतिसोमेशानमरुतो बर्हिषा खनति । तथा पूत ह्यातनेति[3] षड्लेखा[4] लिखिलाष्टाबन्धमिति वक्रितं दर्भं दक्षिणपश्चिमस्यामुत्सृज्य[5] रेखा गायत्र्या प्रोक्ष्य जातवेदो भुवनस्येत्यरणिं[6] गृहीत्वा मथितं लौकिकं वाग्निमादायाहरेत । घृतप्रतीक इति प्रज्वाल्यायद्वा इति [illegible]ोपावरोहेति निधायाग्न आयाह्ययं ते योनि[illegible]र्त प्रज्वाल्य मयि गृह्णामीत्यभिवन्द्य कर्मणे वामि[illegible]रौ प्रक्षालयति । इदमापः शिवा इत्यपो ऽभिमन्त्र्यादिते ऽनुमन्यस्व दक्षिणत [illegible]दिं परिमृजामीति दक्षिणवेदिं नैर्ऋत्याद्यन्तमनुमते ऽनुमन्यस्व पश्चिमतो वेदिं परिमृजामीति तथा पश्चिमवेदिं सरस्वते ऽनुमन्यस्वोत्तरतो

---

१ Thus Ed and La; आसीनो यतो Ma Bh; आसीनमेतो Vi My. According to the Saṃhitā in the Kumb. edition the pratīka is यतो न्विन्द्रम्, acc. to the Mysore MS. एता न्विन्द्रम्।

२ देवादिभि॰ A.

३ Reading of the pratīka uncertain; पूतं ह्यात॰ Ma; पूत ह्यतन इति Vi; My utterly corrupt; पूतस्य तनेति Ed and the printed Saṃhitā; the Mys. MS. of the Saṃhitā पूतं ह्यतस्ते; पूत ह्यतनेति Prayoga; पूत ह्यत इति Darpaṇa.

४ Thus A La; षल्लेखा B and Prayoga and Darpaṇa; but cp. below. At VI. 14 and IX. 4 occurs लेखा।

५ विसृज्य B.

६ Thus Ed La and Vi; ॰णीं Bh, My, Darpaṇa; ॰णी Ma

वेदिं परिमृजामीत्युत्तरवेदिं वायव्याद्यन्तं देव सवितः प्रसुव पुरस्ताद्वेदिं परिमृजामीति पूर्ववेदिं चाग्नेयाद्यन्तमङ्गुलीरास्तीर्य[1] साधावेन पाणिना कूर्चेन वा परिमृज्य गायत्र्या वेदीः प्रोक्षयति। ब्रह्मसोमावृत्विजौ वरयित्वाध्वर्युरों भूपते भुवनपत इति प्रत्येकं प्रेक्ष्य ताभ्यामहं भूपतिरित्युक्ते ब्रह्मन् सोम प्रोक्षिष्यामीत्यन्तं तयोक्ता पुनस्ताभ्यां प्रोक्षेत्युक्तस्तया प्रोक्षयति। ॥ ९ ॥

पात्रादाधावमादाय पवित्रे स्थ इति वेद्यां बर्हिषः स्थापयित्वा तान्परशुरसीति प्रोक्ष्य समिधो मुक्तबन्धाः कृष्णोऽसीति वेदिरसीति वेदिं स्रुवादीन्बर्हिषो[2] बर्हिरसि स्रुग्भ्य इति[2] बर्हिषोऽग्रं दिवे त्वेति मध्यमन्तरिक्षायेति मूलं पृथिव्यै त्वेति प्रोक्षयति। पोषाय त्वेत्यपो बर्हिर्बन्धने संस्राव्य स्वधा पितृभ्य इति सापसव्यं दक्षिणतः प्रोक्ष्यापां शेषं पश्चिमस्यामुत्तरान्तमूर्ग्भवेति स्रावयेद्। उभाभ्यामिति पाणी प्रक्षालयति। पूषा त इति बर्हिर्बन्धं विसृज्य मूलादूर्ध्वमादित्यं[3] व्यञ्जनमसीत्यभिमृश्य[2] पश्चिमतो वेद्यधस्तादुत्तराग्रमूर्णाम्रदसमिति दर्भैः परिस्तीर्य स्वासस्थं देवेभ्य इति प्रागग्रं स्वासने चैकं निधाय

---

१ Thus La My and Ed (here put into brackets); ०ङ्गुली (लि)भिरास्तीर्य Ma Bh Vi.

२ Thus B and Prayoga; बर्हिरसीति बर्हिः स्रुवादीन्स्रुग्भ्य इति A and La.

३ आदित्यं व्य० Ma and Prayoga; आदित्य व्य० Ed La, आदित्यैर्व्य० Vi My and the printed text of the Saṃhitā, the Mysore text of the Saṃhitā has आदित्य स्यन्दन०; the original reading is अदित्यै व्युन्दनम्।

विष्णोः स्तूपो ऽसीति प्राच्यां दक्षिणत इति याम्यामुत्तरत[1] इत्युदीच्यां[1] पश्चिमत इति प्रतीच्यां[1] प्रागुत्तराग्रं परिस्तृणा-त्युत्तराग्रमैशान्यामूर्ध्वं कृत्वा गन्धर्वो ऽसीति पश्चिमस्यामिन्द्र-स्येति याम्यां मित्रावरुणावित्युदीच्यां वेद्यां प्रागुत्तराग्रा-न्परिधीन्परिदधाति । ॥ १० ॥

वायव्यामुत्तराग्रमूर्ध्वं करोति । सूर्यस्त्वेति प्राच्यामुत्तरा-न्तमुपरिष्टादित्यूर्ध्वमधस्तान्नागा इत्यधश्च परिषिच्य वीति-होत्रमित्यग्न्यालये समिधावग्नीशयोर्दिशोरूर्ध्वाग्रे[2] निदधाति । परिस्तीर्यमित्यादिनैन्द्राद्यमुदगन्तमार्षेणापो दत्त्वा सृतासी-त्यादिभिर्दक्षिणादि तेनैव प्रागन्तमुत्तरान्तं च परिषिच्य तरुणासीत्याग्नेयादीशानान्तं प्रदक्षिणमाग्नेयान्तमद्भिः परि-षिञ्चति । वानस्पत्यो ऽसीति प्रणिधी प्रक्षाल्य[3] पृथिव्यापो ग्रहीष्यामीति साक्षतमद्भिरापूर्य वसूनां पवित्रमित्युदगग्रे पवित्रे प्रक्षिप्य दक्षिणेन पाणिनाग्रमितरद्वामेन गृहीत्वा देवो वः सवितेति त्रिरुत्पूय तथा निदधाति । ब्रह्मन्नप इति सोमाप इति च ब्रह्मसोमावृत्विजौ प्रत्येकं प्रेक्ष्य ताभ्यां

---

१ This is the sequence according to all the MSS. and the Prayoga, the Bhāṣya, the Darpaṇa and the Mysore MS. of the Saṃhitā. According to the Ed. and the printed text of the Saṃhitā the text runs: याम्यां पश्चिमत इति प्रतीच्यामुत्तरत इत्युदीच्यां वेद्याम् । This sequence seems indeed more natural, but the tradition of the MSS. is different.

२ Thus A La and Darpaṇa; अग्नीशानयोरू° B.

३ प्रक्षालयति B.

तथा प्रणयेत्युक्तः को व इति प्रणीय वेद्यां दक्षिणोत्तरयोः प्रणिधी निधाय संविशन्तामिति कूर्चेन जलं संस्राव्य गायत्र्या स्रुवं प्रोक्षयेत् । ॥ ११ ॥

भूः स्रुवं गृह्णामीति स्रुवं गृहीत्वा वर्षिष्ठे अधि नाक इति वेद्यधस्तात्समिधौ न्यस्याहीनो निर्वपामीति स्रुवं प्रक्षाल्य निर्दग्धमिति पर्यग्निं कृत्वा निष्टप्तमिति समिधोर्निदध्याददितिरस्यच्छिद्रेत्याज्यस्थालीं गृहीत्वोत्तरे भूतकृतः स्थोपोढमित्यङ्गारं न्यस्य[1] सगराः स्थेति विन्यस्य[2] महीनामिति पचति । पूर्ववत्पवित्रेण त्रिरुत्पूयाज्यस्थाल्याः पृष्ठभस्मेदं[3] विष्णुरिति वेदेन शोधयित्वोद्भवः स्थोदहमिति बर्हिर्दग्ध्वाङ्गारमन्तरितमित्याज्यस्य दर्शयति । दक्षिणतोऽङ्गारं गायत्र्या न्यस्य[4] तथैव चरुस्थालीमधिश्रित्य दर्भोल्केन पक्वावतारयति । पवित्रेणाज्यं पात्रे त्रिरुत्पूय घर्मोऽसीति ग्रन्थिं विसृज्योत्तरपश्चिमे निधायाद्भिः प्रोक्ष्याप्यायन्तामिति पवित्रं जुहोति । वीतिहोत्रमिति समिद्द्वयं घृताक्तं वायव्येऽग्नौ स्थापयित्वा देवस्य त्वेति स्रुवेण होम्यं द्विधा विहरति । ॥ १२ ॥

दक्षिणप्रणिधौ ब्राह्मेण तीर्थेन प्रजापतिपुरोगानावाहयामीत्युत्तरप्रणिधौ दैवेनाग्न्यादीनौपासनयज्ञं यज्ञदैवतविश्वान्देवान्सर्वदेवानावाहयामीत्यन्तं पैतृके वैश्वदेवयज्ञं यज्ञदैवत-

१ Thus B (निवर्त्य Darp.); वस्य A La.
२ Thus Ma and Darpaṇa; न्यस्य A La.
३ Ed La om. पृष्ठ।
४ वस्य A La.

विश्वान्देवानावाहयामीत्यन्तमावाहयेद्यथावाहनं स्रुवेणाज्यमूर्ध्वं नीत्वा [1]जुष्टं निर्वपामीति निर्वापं करोति । हव्यधिद्वयेन द्विधाग्नौ होम्यं दर्शयित्वाग्निर्ज्योतिर्द्वयेन समिदुल्केन द्विधा दहति । समिदसि स्वाहेति समिधं जुहोति । स्रुवेणाज्यं गृहीत्वामृतमसीति अनुत्तानमन्तरितमित्युत्तानं प्रत्युष्टमित्यनुत्तानं होम्यं प्रदक्षिणमभिमन्त्र्याज्यं गृहीत्वोत्तानं स्रुतो[2] दक्षिणतो वामतः प्रणीतायां संधाय चित्पतिस्त्वादिभिस्त्रिभिरेव त्रिधाग्नौ संवपति । ॥ १३ ॥

गायत्र्या समिधः प्रोक्ष्यैकविंशतिराकृतिप्रमाणाः करसंपूर्णा वा समिधो गृहीत्वा मूलाग्राभ्यां घृतं स्पर्शयित्वाभ्यर्चिताज्यचरुभिरिमा मे अग्न इति मूलमध्याग्राणि स्पृशमधो[3] नीत्वोर्ध्वभागे मध्ये च[4] संदधाति । दैवेन तीर्थेन दक्षिणस्यामद्भिः प्रागन्तमदिते ऽनुमन्यस्वेति पश्चिमस्यामुत्तरान्तमनुमते ऽनुमन्यस्वेत्युत्तरस्यां प्रागन्तं सरस्वते ऽनुमन्यस्वेति[5] देव सवितः प्रसुवेति पूर्वस्यामुदगन्तमाग्नेयाद्यन्तं[6] सर्वतस्य प्रदक्षिणं परिषिञ्चति । षष्टिं शतेत्यभिमन्त्र्यायं त

---

१ Before जुष्टं Ma ins. प्रजापतये, Vi My अग्नये ।

२ ततो My only.

३ Thus Bh and Prayoga ; स्पर्शमधो Ma ; स्पर्शं स्पर्शमधो A La.

४ Om. B ; it is found also in the Prayoga.

५ Ma ins. परिषिच्य ।

६ Thus Ed (reading supported by the Bh. and the Prayoga) ; Vi My La om. उदगन्तम् as also does Ma, where, moreover, सर्वत्र instead of सर्वतस्य ।

दध्य इतीशानसंकुलाङ्करोऽङ्गारे ऽग्नौ जुहुयाद्यस्यै देवतायै हविर्निरुप्यते तां देवतां मनसा ह वै ध्यायन्निर्वपेद्यया ह वास्य[1] सुषुम्ना ज्योतिष्मती प्राणवती रेतोधा इत्येता हुतं[2] गृहीत्वा रश्मयस्तस्य: पृश्नौ संदधीरन्स ह वा शुद्धामृतवहा[3] चिनुही दिव्या लोकपावनीत्येताभिश्चन्द्रमसमाप्याययन्सौ[4] नु राजा सोम आप्यायितो मूत्रगामी वपायन्यमृतोद्गारी[5] सुरप्रियेत्येताभिरमृतेन तां देवतां तर्पयति । ॥ १४ ॥

स्रुवेणाज्यं स्रावयन्परिधौ स्पृष्ट्वा वायव्याद्याग्नेयान्तं प्रजापतये स्वाहेति नैर्ऋत्यादीशानान्तमिन्द्राय स्वाहेत्याघारौ जुहुयाच्चक्षुषी बुद्ध्वाग्नये स्वाहा सोमाय स्वाहेत्याज्यभागावुत्तरदक्षिणयोर्जुहोति । युक्तो वहेति पश्चिमादिसौम्यान्तं या तिरश्चीति सौम्यादीन्द्रान्तं संराधन्यै देव्यै स्वाहेतीन्द्रादियाम्यान्तं प्रसाधन्यै देव्यै स्वाहेति याम्यादिवारुणान्तं स्रावयन् हुत्वा मध्यमास्यमिति बुद्ध्वा तत्र व्याहृतीर्जुहोति । तदग्निमुखमिति ब्रह्मवादिनो वदन्ति । सत्येनेत्यभिमृश्याज्येन जुहोत्यग्नये स्वाहा सोमाय स्वाहाग्नीषोमाभ्यां स्वाहा प्रजापतये स्वाहा ब्रह्मणे स्वाहेन्द्राय स्वाहा वसुभ्यः स्वाहा मरुद्भ्यः स्वाहा रुद्रेभ्यः स्वाहा विष्णवे स्वाहा बृहस्पतये स्वाहा मित्राय

---

१ Viz. वा अस्य with irregular sandhi.

२ आहुतिं Ed, हुतं all the other sources.

३ शुद्धोमृ० Ma ; शुद्धा अमृ० Vi My.

४ ०पाविनी० Vi My .

५ Uncertain ; वपायान्य० Ma ; वपायाम्य० A La ; the Bh. presupposes a reading वपायनौ ।

स्वाहा वरुणाय स्वाहादित्येभ्यः स्वाहाश्विभ्याꣳ स्वाहा पूष्णे स्वाहा रुद्राय स्वाहा रुद्रदैवतसोमाय स्वाहौपासनयज्ञाय स्वाहा यज्ञदैवतविश्वेभ्यो देवेभ्यः स्वाहा सर्वदेवेभ्यः स्वाहेत्यन्तं हुत्वा दर्व्याभिघार्य चरुं सावित्र्या गृहीत्वा जुह्वा व्याहृतीर्जुहोति। अतो देवा इदं विष्णुरित्याज्यं समृद्ध्यै जुहुयात्पैतृके वैश्वदेवयज्ञाय स्वाहा यज्ञदैवतविश्वेभ्यो देवेभ्यः स्वाहेत्यन्तं हुत्वा पक्वं जुहुयादिति सर्वहोमानामादिराघारो विज्ञायते। ॥ १५ ॥

अथ सामान्यतः क्रियाया होममन्त्राः। धाता ददातु नो रयिं धाता प्रजाया धाता ददातु नो रयिं प्राचीं धाता ददातु दाशुषेऽनु नोऽद्यानुमतिरन्विदनुमते त्वमा मा वाजस्य समाववर्त्त्यनुमन्यतां यस्यामिदं राकामहꣳ यास्ते राके सिनीवालि या सुपाणिः कुहूमहꣳ कुहूर्देवानामिति धातादि षोडश। ॥ १६ ॥

इमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययासन्निति पञ्च वारुणं। प्रजापते न त्वत्प्रजापतिर्जयानित्युपांशुयाजे प्राजापत्ये। चित्तं च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं चाविज्ञानं च मनश्च शक्करीश्च दर्शश्च पूर्णमासश्च बृहच्च रथंतरं च स्वाहेति चित्तादि द्वादश जयाः। अग्निर्भूतानामधिपतिः स मावत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपां समुद्रः स्रोत्यानामन्नं

सम्राज्यानामधिपति तन्मावतु सोम ओषधीनाꣳ सविता प्रसवानाꣳ रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते मावन्तु पितरः पितामहाः परे ऽवर इत्यष्टादशाग्निर्भूतादयो ऽभ्यातानाः । ॥ १७ ॥

ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयो ऽप्सरस ऊर्जो नामेति सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयो ऽप्सरस आयुवो नामेति सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो नामेति भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरस स्तवा नामेति प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नयो नामेति इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापो ऽप्सरसो मुदा नामेति भुवनस्य पत इति परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवो नामेति सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो गन्धर्वस्तस्य विद्युतो ऽप्सरसो रुचो नामेति दूरेहेतिरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवो नामेति चारुः कृपणकाशी कामो गन्धर्वस्तस्याधयो ऽप्सरसः शोचयन्तीर्नामेति स नो भुवनस्य पत इति । ऋताषाडृतादि भुवनस्य स न इति वर्जयित्वा प्रत्येकं ताभ्योऽन्ता राष्ट्रभृतो द्वादशेति प्राजापत्यादि[1] मूलहोमो । बभ्रूत्रपैटकयच्छान्ते व्याहृतिः । ॥ १८ ॥

अथान्ते होममन्त्राः । यदस्याग्नये स्विष्टकृते ऽग्नये ऽन्नादायाग्नये ऽन्नपतये प्रजापतय इन्द्राय विश्वेभ्यो देवेभ्यः

---

[1] The Bh. points to प्राजापत्यादिर्।

सर्वाभ्यो देवताभ्यः सर्वचैवाग्नये स्विष्टकृते वास्तुपत इति स्विष्टाकारो । यन्म आत्मनः पुनरग्निश्चक्षुरिति मिन्दाहुती । इष्टेभ्य इत्यादि दशान्ते व्याहृतिरित्यृद्धिः । आश्रावितं ब्रह्म यत्कर्मेति कृतान्तं । यत्प्रमत्तो मनो ज्योतिरथाश्वाग्ने यदस्मिन्स्वस्ति नो यत इन्द्र इति विच्छिन्नमेधोऽस्येधिषीमहि स्वाहा बैल्वं । समिदसि तेजोऽसि तेजो मयि धेहि स्वाहा पालाशं । यमस्य धीमहि मृत्योर्मे पाहि स्वाहा नैयग्रोधं । सूर्यस्य धीमहि चक्षुर्मे पाहि स्वाहा आश्वत्थं । सोमस्य धीमहि चित्तं मे पाहि स्वाहा औदुम्बरं । वायोर्धीमहि प्राणान्मे पाहि स्वाहा शमीं । ब्रह्मणो धीमहि बुद्धिं मे पाहि स्वाहा खादिरमिति सप्त समिधः । सप्त ते अग्ने ऋतुधा नेति पूर्णाहुती । अग्निर्भुक्तमित्युपजुह्वामाज्यं[1] गृहीत्वाग्निर्जीर्णमिति[1] जुह्वा चरुमवदाय हुत्वा समङ्क्तां बर्हिरिति स्रावयञ्जुहोति । ततो वामेन स्रुवं गृहीत्वा दक्षिणेनाज्यपात्रं संगृह्याग्नेरुपरि धारयन्नाज्यशेषमिन्द्राय स्वाहेति जुहुयात् । ॥ १९ ॥

तत्पात्रेणाधावमादाय स्रुवेणान्तरितमग्निस्तृप्यत्वित्युपाग्नि[2] पश्चिमतो वेदिस्तृप्यत्विति वेद्यां द्यौस्तृप्यत्वित्याकाशे पृथिवी तृप्यत्विति भूमौ ब्रह्माद्यास्तृप्यन्तामिति दक्षिणस्यां तर्पयति । प्रणीतायां दक्षिणस्यां दैवेनापो गृहीत्वौषधिवनस्पतिगन्धर्वा-

---

१ गृहीत्वा only in Ed and the Bh.; La, Vi, My: उपजुह्वाज्येनाग्निर्जी० ।

२ ग्निः Vi My and Bh.

अपरस्यैव तृप्यन्तामित्युत्तरस्यां वेद्यां[१] तर्पयति[१]। तथोत्तरस्यां प्रणीतायां सापसव्यमपो गृहीत्वा पैतृकेण[२] दक्षिणतः पितरः पितामहाः प्रपितामहाश्चाक्षय्यमस्तु तृप्यन्तामिति दक्षिणस्यां तर्पयति। प्रासावीरित्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा दक्षिणादिप्रणिध्योरुपान्ताङ्गुष्ठानामिकाभिः पवित्रमक्षतं गृहीत्वा पवित्रमसि पूर्णमसि सदसि सर्वमसीति पर्यायतो जुहोत्यक्षितमसीति प्रणिधिमुत्तरां चालयित्वा तदाधावेन प्राच्यां दिशि दक्षिणायां[३] दिशि प्रतीच्यां दिश्युदीच्यां दिश्यूर्ध्वायां दिश्यधोधराधरैरिति यथादिशं परिषिच्य माहं प्रजामिति[४] गृहीत्वा दक्षिणप्रणिधौ स्वल्पमाधावं स्रावयित्वा स्वां योनिमिति दक्षिणप्रणिध्यां[५] जलमुदकपात्रे[६] स्रावयति[७]। आपो हि ष्ठादिना तदद्भिः प्रोक्ष्य प्रणिधौ विसर्जयति। ॥ २० ॥

पुनर्देवेभ्यो हव्यं वहेत्यग्नेर्दर्शनेन स्रुवं विसृज्य[८]। वर्षिष्ठा गह्वरेष्ठोऽयमिति वर्षिष्ठसमिधौ जुहुयादूर्ध्वं यज्ञं नयतमित्यूर्ध्वसमिधौ। पश्चिमतः परिधिमपनयेत्येवं[९] दक्षिणत

१ Thus Ed; वेद्यां om. La Vi My; तर्पयित्वा B.

२ After पैतृकण (०केन Vi My Bh) La Ma Vi My ins. मे; मेदक्षिणतः also the Darpaṇa.

३ Thus Ma Ed and the Samhitā; ०णस्यां La Vi My.

४ Ed ins. उत्तरप्रणिधि।

५ Thus Ma Bh La Vi My; ०णिध्या Ed.

६ Thus Ma Ed Bh; उदपात्रे La Vi My Darpaṇa.

७ स्रावयेत् A and La.

८ Thus A La and Darpaṇa; विसृजति B.

९ एव La Vi My.

उत्तरतश्च परिधीन्। पश्चिमतो विष्णोः सदनमसीत्येवं दक्षिणत उत्तरतः प्राच्यामिति च परिस्तरणबर्हिषः सर्वान्परिसमूह्याप्यायन्तामिति जुहोति। शुन्धन्तां पितृषदनꣳ शुन्धन्तां देवसदनमित्यविच्छिन्नमास्तीर्य नैर्ऋते[१] दहेदविच्छिन्नेन ब्रह्मवर्चसायेति। भूतिः स्थेति भस्म गृहीत्वा[२] ललाटहृद्बाहुकण्ठादीनादित्यः[३] सोमो नम इत्यूर्ध्वाग्रमालिप्यापो[२] हि ष्ठेति प्रोक्ष्य ओं च मे स्वर इति बालकृतं वेति चाग्निं पूर्ववदादित्यं चोपस्थाय पुनर्वेदिमूलमासाद्याग्निं[४] वैश्वानरसूक्तेनोपस्थाय प्रणामं कुर्यादिति क्रियान्ते होमः। ओं च मे स्वर इति लौकिकाग्निविसर्जनमिति विज्ञायते[५]। ॥ २१ ॥

## प्रथमः प्रश्नः समाप्तः ॥

---

१ Thus A and La; नैर्ऋत्ये B.

२ A La om. the words गृहीत्वा up to ऊर्ध्वाग्रम् (incl.).

३ After हृत् Ma ins. कक्ष, which is not found in Bh. and Darpaṇa; cp. note on II. 7.

४ वेद्या मूलम् B.

५ Thus B and Darpaṇa; इति विखनाः प्राह A.

अथ शारीरेषु संस्कारेष्वृतुसंगमनवर्जं नान्दीमुखं कुर्यात्। स्वः कर्तास्मीति गर्भाधानादिक्रियां यदहः करोति तदहर्नन्दी[१] भवति। तस्या मुखं सर्वदेवपितृदैवत्यं नान्दीमुखमभ्युदयश्राद्धं दैविकवत्करोति। पूर्वेद्युरेव पूर्वाह्णे युग्मान्ब्राह्मणान्सुप्रक्षालितपाणिपादान्क्रोत्रियानन्नेन [२]परिवेष्यायेडामभ्युच्छ्रायावनीदमिति मण्डलान्युपलिप्यास्त्वासनमित्यासनानि सदर्भयवानि निधाय तेष्वासीनान्पुष्पाद्यैर्यथोपपादमलंकरोति। शुक्लबलिश्वेतसर्षपदधितण्डुलमित्यामनन्ति[३] चतुःशुक्लमेतदादायाग्नेर्दक्षिणतोऽग्नये सोमाय प्रजेशाय विश्वेभ्यो देवेभ्य ऋषिभ्यः पितृभ्यो भूतेभ्यः सर्वाभ्यो देवताभ्यो नम इत्यन्तेन तन्नाम्ना पुष्पादिभिरभ्यर्च्य बलिं ददाति॥ १॥

चरुमपूपादि च निवेद्योदकुम्भं धारास्वित्यद्भिरापूर्य नमः सुलोमीति पाप्मनोऽपहत्यै सपल्लवं[४] कूर्चं पवित्रमाभरणं तस्मिन्निदधाति। प्रतिसरां[४] कुतपस्य दुकूलस्य वा त्रिवृतां पुष्पाद्यपि[५] संभृत्यादाय जुहुयादृचोऽग्ने नयाद्यग्निदेवत्याः सोमो धेन्वादि सौमदैवत्या ब्रह्मजज्ञानादि ब्रह्मदेवत्ये श्रतो देवादि विष्णुदैवत्या आनोरुद्रमन्यमित्यादि रुद्रदैवत्ये

---

१ नन्दी Ma Ed; नान्दी La Vi My; नन्दि Bh.

२ Corrected; परिवेष्य (instead of परिष्य) all.

३ Original reading uncertain; शुक्लबलिं Ma; शुक्लं बलि La Vi My; शुक्लं बलिश्वेत० Ed.

४ Thus, in accordance with the Darpaṇa, Ma; सपल्लवं कूर्चं निदधाति पवित्राभरणं प्रति० A.

५ Thus Ma Ed; पुष्पाद्यादिभिः La Vi My; the Bh. points to पुष्पाणि अपि।

विश्वादि विश्वेदेवदैवत्या यतः स्वमसीत्यादि सप्तर्षिदैवत्या ये भूता इत्यादि भूतदैवत्या व्याहृतीरग्नये कव्यवाहनाय सोमाय पितृमते यमाय चाङ्गिरस्पतये एते य इह पितर उशन्तस्त्वा मा नो ददात्वित्यृचः पितृदैवत्याः पृथिवीगतेभ्यः पितृभ्यो ऽन्तरिक्षगतेभ्यः पितामहेभ्यो दिविगतेभ्यः प्रपितामहेभ्यः स्वधा नमः स्वाहेति पितृभ्यः पैतृकमुपवीती हुत्वा व्याहृतीः सामान्यतो देवताभ्यस्ताभ्यो ऽष्टाभ्यो जुहोति । पात्रेष्वाज्यभागं स्रुवेणाभिघार्य द्विर्देवशेषं पितृभ्यः प्रागन्तं क्षिप्त्वा तदङ्गुष्ठेन तच्चरुं स्पर्शयति । ततो नमस्कृत्या सत्येन रजसेति क्षीरेण दध्ना वा श्वेतमन्नं ब्राह्मणान्भोजयेत् । अनुत्थितेभ्यः समूह्योच्छिष्टं शोधयित्वाचान्ताननुमान्य पुण्याहं वाचयित्वा स्वस्तिसूक्तेन तामभिमृश्य[1] स्वस्तिदा विशस्पतिरिति प्रतिसरां बध्नाति । नान्दीमुखेभ्यः पितृभ्यः स्वधा नमो नान्दीमुखेभ्यः पितामहेभ्यः स्वधा नमो नान्दीमुखेभ्यः प्रपितामहेभ्यः स्वधा नम इत्युक्ते स्वधास्त्विति प्रतिवदतो देवान्तं विसर्जयति । तेनोदकुम्भेनापरेद्युः स्नायान्नान्दीमुखमिति विज्ञायते । ॥ २ ॥

अथ[2] गर्भाधानादिवर्षे पञ्चमे ब्रह्मवर्चसकाममायुष्काममष्टमे नवमे श्रीकामं वसन्ते ब्राह्मणमुपनयीतैकादशे ग्रीष्मे राजन्यं द्वादशे शरदि वैश्यमा षोडशाद्ब्राह्मणमा द्वाविंशात्

---

१ तन्तुम् instead of ताम् A.
२ Ma om.

क्षत्रियस्या चतुर्विंशाद्वैश्यमिति वातीते सावित्रीपतिता[१] भवन्ति। तेषामुद्दालकप्रायश्चित्तं[२]। द्वौ मासौ यावकेन मासं क्षीरेणामिक्षयार्धमासमष्टरात्रं घृतेनायाचितं[३] षड्रात्रं त्रिरात्रमुदकेनोपवासमहोरात्रं वर्तेत इत्येतदुद्दालकमनेन[४] वाश्वमेधावभृथस्नानेन[५] वा व्रात्यस्तोमेन वेष्ट्वा पुनर्गर्भाधानादिसंस्कारान्कृत्वा[५] शुद्धा उपनेयाः सावित्रीपतिता भवन्तीति विज्ञायते। ॥ ३ ॥

ब्राह्मणस्य पालाशो बैल्वो वा केशान्तो निर्व्रणो ऽनुमृष्टो[६] ऽनुद्वेजनो[७] यूपवदवक्रो दण्डः कृष्णमृगस्याजिनं मौञ्जी मेखला। क्षत्रियस्य नैयग्रोधो ललाटान्तो दण्डो रौरवमजिनं मौर्वी मेखला। वैश्यस्यौदुम्बरो नासिकान्तो दण्डो बास्तवमजिनं[८] शाणी मेखला। ओं भूर्भुवः सुवस्तत्सवितुरिति सावित्री। ओं भूर्भुवः सुवस्तत्सवितुरापो ज्योती रस इति प्राणायाम ओं भूर्भुवः सुवः स्वाहेति व्याहृतिः। अग्नये समिधमिति द्वे अग्नये समिधाविति चत्वार्यग्नये समिध इति समिदाधानमंतानि ब्राह्मणस्य। ओं भूर्भुवस्तत्सवितुरिति सावित्री। ओं

१ सावित्र्या प० Vi My.

२ Ma ins. निश्चित्य after प्रायश्चित्तं।

३ Thus all, except the Darpaṇa, which correctly has ०याचितेन।

४ Thus Vi My and Bh; अनेन अश्वमे० the other sources.

५ Thus Ma My Darpaṇa; संस्कारं Ed Vi Bh.

६ Thus My; अनुमृष्टो Vi; नुमृष्टो Ed Ma. The Bh., which explains नास्त्यनुमर्शनं त्वगुद्गमनं यस्य सो ऽनिःसृष्टः, points to ऽनुमृष्टः।

७ नुद्वेजिनो Ma La Vi My Darpaṇa.

८ बास्तव० all (also Bh and Darpaṇa); बास्त० Ed. and La.

भूर्भुवस्तत्सवितुस्तेजो ज्योती रस इति प्राणायाम । ओं भूर्भुवः स्वाहेति व्याहृतिः । अग्नये समिधमिति द्वे अग्नये समिधाविति समिदाधानमेतानि क्षत्रियस्य । ओं भूस्तत्सवितुरिति सावित्री । ओं भूस्तत्सवितुरग्निर्ज्योती रस इति प्राणायाम । ओं भूः स्वाहेति व्याहृतिः । अग्नये समिधमिति समिदाधानमेतानि वैश्यस्य भवन्ति । ॥ ४ ॥

प्रोष्ठपदहस्ताश्विन्यनूराधापूर्वोत्तरपुनर्वसू[1] मृगशिरो[2] वा यावन्ति पुंनामानि नक्षत्राणि तत्राग्नेर्वायव्यामुपवीताजिनमेखलाहतवस्त्रदण्डशरावाश्मसमिद्दर्भादिसंभारान्दर्भेषु संभृत्य सं च त्वे जग्मुरिति प्रोक्षत्यथाज्येनाघारं[3] कृत्वाचान्तं मङ्गलयुक्तं कुमारमासयित्वाग्नेर्नैरृत्यां[4] मस्तके दर्भौ प्रागुत्तराग्रौ विन्यस्य[5] सरोमाणं दर्भमिन्द्र शस्त्रमिति चतुर्भिः प्रदक्षिणं चतुर्दिशं छित्त्वा येनावपत्क्षुरेणेति सर्वतो वपति नाधो जत्रोर्गोशकृद्युक्ते शरावे केशान्गृह्णीयात् । यत्र मौण्ड्यं शिखाभ्रूवर्जमानखं वपति । स्नात्वाचान्तं पुण्याहं वाचयित्वा भुक्तवन्तमासयति दक्षिणे कुमारमथ परिस्तीर्यायुर्दा अग्न आयुर्दा देवेति प्रधानं पञ्च वारुणं व्याहृतिपर्यन्तं जुहोत्या-

---

१ ॰नूराधे La Ed; ॰राधो My; ॰राधा Vi Bh; ॰राध Ma.— ॰वसू La Ed; ॰वसु Ma Vi My.

२ ॰शिरा B.

३ Thus B and La; प्रोक्ष्याथ A and Darpaṇa.

४ आसीनम् instead of आसयित्वा A La.

५ संन्यस्य Ed only.

तिष्ठेति वायव्यामश्म[1] पादाङ्गुष्ठेन दक्षिणेन स्पर्शयति[2] । या अकृन्तन्निति वस्त्रमियं दुरुक्तादिति मेखलां परीदमित्युत्तरीयं यज्ञोपवीतमित्युपवीतं मित्रस्य चक्षुरिति कृष्णाजिनं तस्मै ददाति । ॥ ५ ॥

ततो विधिवदाचमनं कारयित्वा सदस्याननुज्ञाप्य देवस्य त्वेति बाहू आलभ्योत्तरे[3] प्राङ्मुखः[4] प्राङ्मुखमुपनयीतायुष्टे विश्वत इति दक्षिणपाणिं गृहीत्वोद्धरत्यग्निष्टे हस्तमग्रभीदिति विसर्जत्यसावपो ऽशानेत्याचारं । मम हृदय इति तस्य हृदयस्पर्शनं कृत्वा भूर्भुवः सुवः सुप्रजा इति प्रशंसति । भूरृक्षु त्वेति भुवो यजुःषु त्वेति सुवः सामसु त्वेतीष्टुतस्त[5] इत्यनलस्य त इतीदं वत्स्याव इति षड्भिः कर्णे जपित्वा नाम शर्मान्तं कुर्यादग्निरायुष्मानित्यादिकैः पञ्चभिर्दक्षिणहस्ते कनिष्ठाद्यङ्गुल्यग्राणि पर्यायेण विसृजेदायुर्दा इति दक्षिणे कर्णे प्रतिष्ठ वायाविति वामे च जपति । स्वस्ति देवेत्यग्निं प्रदक्षिणं कारयित्वा दक्षिणे निवेश्य राष्ट्रभृदसीति कूर्चं दत्त्वा शं नो देवीरिति प्रोक्ष्य मूलहोमं व्याहृतिपर्यन्तं जुहोत्यदितिस्ते कक्ष्यामिति कृतशेषं भोजयित्वा योगे योगे तवस्त-

१ Thus La Vi My Ed Bh ; ॰श्मानं Ma.

२ स्पर्शयित्वा A and La.

३ आलभ्यो॰ La Vi My Darpaṇa ; आलंभ्यो Ma Ed ; आलम्ब्य Bh.

४ This word om. B.

५ Thus Ma ; ॰तीष्णतस्त A ; read probably ॰तीष्टस्त, cp. Hir. gṛhys. I. 5. 13 ; see, however, the note of Oldenberg to his translation in S. B. E.

रमित्याचमनं ददाति। ॠतमित्त्वित्यादित्यं नमस्कृत्यागन्त्रा समगन्महीति प्रदक्षिणं कारयित्वा शकाय त्वेत्युत्तमाङ्गमभिमृश्याधीहि भो इति तेन प्रार्थितो गुरुरथाह सावित्रीं[१] भो[१] इति[१] शिष्यमनुशास्ति। गणानां त्वेति गणमुख्यमोजो[२]ऽसीति सावित्रीं पावका नः सरस्वतीति सरस्वतीं च प्रणम्य यथोक्तं[३] सावित्रीं पच्छो ऽर्धर्चशो व्यस्तां समस्तामध्यापयेत्। ॥ ६ ॥

धातादिपूर्वं सवित्रे काण्डर्षये सदसस्पतिमा देवो यात्वभीवृतं स घा[४] नो वि जनाञ्छ्यावा वि सुपर्णो भगं धियमिति सावित्रव्रतसूक्तमग्ने वायविन्द्रादित्य व्रतानामिति सावित्रव्रतवन्धं पञ्चभिर्व्याहृत्यन्तं जुहोत्यग्नये समिधमिति द्वे अग्नये समिधाविति चत्वार्यग्नये समिध इति सप्त पालाशाङ्कुराणि[५] घृताक्तानि जुहोति। सूर्य एष[६] ते पुत्र इत्यादित्यं दर्शयत्यष्टाभिः समिद्भिर्होमकर्मणि शिष्यं योजयेद्यथा हेति दक्षिणादिप्रदक्षिणं वेदिं परिमृज्य पूर्ववत्परिस्तृणाति व्याहृतीरेषा ते मेधां म इन्द्रो ददात्वप्सरास्त्वा मां मेधेत्यष्टौ जुहोति। यथा हेति तथा परिमृज्य प्रामात्रीरित्यन्तैस्चतुर्भिः

१ सावित्रीमिति A and La.

२ After गणमुख्यम् A La ins. प्रणम्य।

३ यथोक्तां La Vi My.

४ Thus Ed and printed Saṃhitā text; सखा Ma La Vi and grantha MS. of Saṃhitā; सभा My.

५ पलाश० Vi My.

६ Thus with hiatus all, also the Saṃhitā.

प्रवाहणं कृत्वा भूतिः स्मेति भस्मालिप्यापो[1]हि ष्ठेति प्रोच्य यत्ते अग्ने तेजस्तेनेत्यग्निमुद्वयमित्यादित्यं चोपतिष्ठेत । नित्यं सायंप्रातरेवं जुहुयाद्यतो ब्रह्मदत्तमिदमिज्यमग्निहोत्रमेतन्मूलास्तदग्नय[2] इति ब्रह्मवादिनो वदन्ति । ॥ ७ ॥

अग्निष्ट आयुरिति दण्डमिन्द्रो मरुद्भिरिति शरावं[3] कठिनं वा[3] भैक्षपात्रं दद्यात् । भवति भिक्षां देहीति ब्राह्मणो ब्रूयात्क्षत्रियो भिक्षां भवति देहीति वैश्यो भिक्षां देहि भवतीति । मौनव्रतेन ब्राह्मणेभ्यो भैक्षमाममितरेभ्यो गृह्णीयाद्यस्य त इति गुरुर्भैक्षमादाय सुश्रव इति प्रोक्षयति[4] । हविषापूपलाजसमायुतेन मिन्दाहुती हुत्वान्तहोमो[5] हूयते । मौनव्रतेना सन्ध्यागमात्तिष्ठति । तस्मा आश्रमधर्माण्याचक्षीत । चोदितातिक्रमे दण्डेन न हन्याद्दुष्टवाक्यैर्न शपत्यतिक्रमानुरूपं कृच्छ्रमादिशति । गुरुणा शिष्यो रक्षितव्यो यस्माच्छिष्यकृतं दुरितं प्राप्नोत्यवश्यमकुर्वन्तं शिष्यं त्यजत्यन्यथा त्यागे पत्नीपुत्रशिष्याणां पतति । काषायाजिनयोरन्यतरवासा जटी शिखी वा[6]

---

१ Between भस्म and उपलिप्य A La ins.: गृहीत्वा ललाटहृक्बाहुकण्ठादीनादित्यः सोमो नम इत्यूर्ध्वाग्रम् । This is clearly repeated from I. 21: 20. 5, where, however, A had not given this passage. The Bh. comments also here upon it.

२ इदमिज्य॰ Ma Bh Vi ; इदमिज्यमिदमग्नि॰ Ed ; इदमाज्य॰ My.

३ Thus Ed La Vi and without वा My ; शरावमपि कठिनं वा B.

४ प्रोच्य Ma, Darpaṇa.

५ ॰होमो Ed Bh La Vi My ; होमं Ma ; होमे Darpaṇa.

६ वा missing in B.

मेखली दण्डी सूत्राजिनधारी ब्रह्मचारी शुचिरक्षारलवणाशी यथोक्तेषु वर्णेषु ब्रह्मचारिधर्माण्यनुतिष्ठतीति विज्ञायते ॥ ८ ॥

अथ पारायणव्रतानि । चतुर्थे पञ्चमे सप्तमे वा[1] पुण्ये पुंनाम्नि नक्षत्रे शिष्यमाचान्तं पुण्याहं वाचयित्वाग्निं परिस्तीर्य प्राङ्मुखमुपवेशयति । तस्योत्तरे माता ब्रह्मचारी वासीत । धातादिपूर्वं सावित्रव्रतसूक्तमग्ने वायविन्द्रादित्य व्रतानामित्यूहित्वाचारिषं विसर्जयामीति सावित्रव्रतविसर्गं कृत्वा पूर्वाणि सूत्रदण्डादीन्यप्सु विसृज्य स्नाताय नवान्युपवीतादीनि पूर्ववद्दत्त्वा तमद्भिरभ्युक्ष्य दक्षिणे निवेश्य धातादिपूर्वं प्रजापतये काण्डर्षये सदसस्पतिं प्रजापते न त्वद्रयीणां पतिं प्रजापते त्वं निधिपास्त्वेमे लोकाः प्रजापतिं प्रथमं यो राय इत्यग्न्यादिषु पञ्चसु प्राजापत्यमित्युभयत्रोहित्वा वार्षिकं प्राजापत्यव्रतबन्धं कृत्वा [2]शिष्येण व्रतं बन्धयति· वर्षे वर्षे । तथैव व्रतविसर्गं कृत्वा तत्तद्व्रतं विसृज्यान्यद्व्रतं बध्नाति ॥ ९ ॥

सोमाय काण्डर्षये सदसस्पतिं सोमो धेनुमषाढं त्वं सोम क्रतुभिर्या ते धामानि हविषा त्वमिमा ओषधीर्या ते धामानि दिवीति सूक्तं सौम्यव्रतस्याग्नये काण्डर्षये सदसस्पतिमग्ने नय प्र वः शुक्रायाच्छा गिरो ऽग्ने त्वमस्मदग्ने त्वं पारय प्र कारवो मननेति सूक्तमाग्नेयव्रतस्य । विश्वेभ्यो देवेभ्यः काण्डर्षये सदसस्पतिमा नो विश्वे शं नो देवा ये सवितुरग्ने

१ दिवसे ins. Ma only.
२ A and La ins. शिष्यस्य।

याहि द्यौः पितर्विश्वे देवाः शृणुतेति सूक्तं वैश्वदेवव्रतस्य। ब्रह्मणे काण्डर्षये सदसस्पतिं ब्रह्म जज्ञानं पिता विराजां ब्रह्म देवानन्तरस्मिन् ब्रह्मन्देवाश्चतस्र इति सूक्तं ब्राह्मव्रतस्य। ऋतं च सत्यं च देवव्रतस्य यन्मे गर्भं तरत्स मन्दीति प्राजापत्ये वसोः पवित्रं पवस्व[1] विश्वचर्षण[1] इति सौम्ये जातवेदस इत्याग्नेये विष्णोर्नु कं सहस्रशीर्षा त्वमग्ने रुद्रा त्वाहार्षमिति वैश्वदेवे एकाक्षरं त्वक्षरितेति ब्राह्मे तत्तद्व्रतदैवत्यं[2] स्वाध्यायसूक्तं तत्तत्काण्डं चाधीयीत। ॥ १० ॥

तथैव धातादिव्रतविसर्गं हुत्वा ब्राह्मव्रतं विसृज्य नवान्युपवीतादीनि पूर्ववद्दत्त्वा प्रवर्ग्यदेवताभ्यः कल्पयामि सांराज्यै कल्पयामि महावीराय कल्पयामि पृथिव्यै कल्पयामि स्वाहेत्युत्तरे सोमाय कल्पयामि पितृभ्यः कल्पयामि पितृभ्यो मन्त्रपतिभ्यः कल्पयामि रुद्राय कल्पयामि रुद्राय रुद्रहोत्रे कल्पयामि स्वाहेति दक्षिणे चाहुतीरेता हुत्वाग्ने व्रतपते शुक्रियव्रतं बन्धयामीति शुक्रियव्रत षाण्मासिकं त्रैमासिकं वा बध्नीयाच्चितः स्थ परिचितः स्थेत्यादिनानुवाकेन शिरोऽहतेन वाससावेष्टयेद्यथैनमहः सूर्यो नाभितपेन्मुखमस्य। तस्माद्रेफायति[3]। स्त्रीशूद्राभ्यामनभिभाष्य शुक्रियब्राह्मणारुणनारायणाद्यारण्यकाण्डमधीयीत[4]। इति व्रतपारायणं विज्ञायते। ॥११॥

---

१ This pratīka only in B and Darpaṇa.

२ Thus La and Ed, तद्व्रत॰ the other sources (My incomplete).

३ रेभायति Bh only.

४ नारायणाद्यरण्य॰ B.

अथाषाढोपाकर्म कुर्यादापूर्यमाणपक्षे रिक्तापर्वणी वर्जयित्वा बुधवारे तिथिं गृह्णाति । तत्राघारं[1] हुत्वाग्निं परिस्तीर्य शिष्यं वापयित्वा स्नातं पुण्याहं वाचयित्वा प्रोक्षणैः प्रोक्ष्याग्निं प्रदक्षिणं कारयित्वा कूर्चं ददात्यासयित्वा दक्षिणे शं नो देवीरिति प्रोक्ष्य प्रधानाः पञ्चाशदाहुतीराज्यचरुभ्यामक्षतधानाभ्यां वा. जुहोत्यग्नये पृथिव्यै ऋग्वेदाय यजुर्वेदाय सामवेदायाथर्वणवेदाय[2] वायवेऽन्तरिक्षाय दिवषाय सूर्याय दिग्भ्यश्चन्द्रमसेऽध्यायायानध्यायायाध्यायदेवताया अनध्यायदेवतायै श्रद्धायै मेधायै धारणाया आचार्याय छन्दस ऋषिभ्यः सप्तर्षिभ्यो मुनिभ्यो गुरुभ्योऽहोरात्रेभ्योऽर्धमासेभ्यो मासेभ्य ऋतुभ्यः संवत्सरेभ्यः परिवत्सरेभ्य इदावत्सरेभ्य इद्वत्सरेभ्यो वत्सरेभ्यो ब्रह्मणे सावित्र्यै प्रजापतय उशनसे च्यवनाय बृहस्पतये सोमायाङ्गिरसे दर्भाय शङ्खाय लिखिताय स्थूलशिरसे वैनतेयाय शिखिन ईश्वरायाधिकृताधिदेवताभ्यः सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषं स्वाहेति पूर्ववत्प्राजापत्यव्रतबन्धं धातादि पञ्च वारुणं मूलहोमं स्विष्टाकारं च हुत्वा हुतशेषमदितिस्ते कक्ष्यामिति भोजयित्वा योगे योगे तवस्तरमित्याचमनं ददात्यथ प्राङ्मुखमुदङ्मुखं[3] वा ब्रह्माञ्जलिं कारयित्वा दक्षिण-

---

१ After तत्र A ins. आज्येन ।
२ The Saṃhitā : अथर्ववेदाय ; in Vi My this word is missing.
३ Thus Ma Bh and Darpaṇa ; ०मुख उदङ्मुखो A and La.

मध्यासीनं वेदान्वेदौ वेदं वा सूत्रसहितमध्यापयत्यन्तराण्येवमध्यापयितुकामो[1] कृत्वाध्यापयेदर्धपञ्चमानर्धषष्ठान्वा मासानध्यायानुपाकुर्वीतात ऊर्ध्वं शुक्लेषु । कामं तु वेदाङ्गानीति वेदोपाकरणमथ श्रावणे पौर्णमास्यामग्निं परिस्तीर्य शिष्यं वापयित्वा स्नात[2] पुण्याहं[2] वाचयित्वा[2] पूर्ववद्व्रतबन्धं धातादि पञ्च वारुणं मूलहोमं स्विष्टाकारं च जुहोत्यध्ययनपारायणायेति श्रावणं । तथैव नैष्ठिको यावज्जीवमाश्रमधर्माण्यनुतिष्ठेतोपाकुर्वाणो वेदमधीत्य स्नायादिति विज्ञायते[3] । ॥ १२ ॥

अथ समावर्तनं व्याख्यास्याम । उदगयन आपूर्यमाणपक्षे तिष्योत्तरेषु चित्राविशाखयोर्हस्तरोहिण्योर्मृगशिरसि वा नक्षत्रे यत्रापस्तत्रागारे गोष्ठे वाघारं कृत्वाग्निं परिस्तीर्य तथैव धातादिव्रतविसर्गं कृत्वा वयः सुपर्णा इति वस्त्रावकुण्ठनं मोचयित्वा शुक्रियव्रतं विसृजतीमं[4] स्तोमं त्र्यायुषं जमदग्नेरिति प्रधानं पञ्च वारुणं मूलहोमान्तं कृत्वोदयं तमस उदु त्यमित्येताभ्यामादित्यमुपस्थायोदुत्तममित्युत्तरीयमथा वयमिति सूत्रदण्डादीन्यप्सु विसृज्य[5] शिवो नामासीति क्षुरमुपलेन कर्षयित्वा माचतैराधावैः शिवा न इति शिरो ऽञ्जयित्वा[6]

---

१ Instead of अध्यापयति Vi My अध्ययनं करोति ।

२ These three words not in B; they are found in A La and the Darpaṇa.

३ इति वि० om. Ed.

४ Thus B and Darpaṇa; विसर्जयतो० A; विसृज्य La.

५ Thus A La and Darpaṇa; विसृजति B.

६ जयित्वा La; च्चयित्वा A; but cp. also Darpaṇa: अंक्ता ।

गोदानमप उन्दन्त्वोषधे त्रायस्व यत्क्षुरेणेति चतुर्दिशं येनावपदिति सर्वतो नखान्तं वपति । शरावे सानडुहगोशकृति केशादीन्यादायेदमहममुष्येत्युदुम्बरदर्भयोर्मूले गोष्ठे वा गूहयेदन्नाद्याय व्यूहध्वमिति दन्तधावनमौदुम्बरेण काष्ठेन करोति । शीतोष्णाभिरद्भिरापो हि ष्ठेत्यादिभिर्ऋग्भिस्तिसृभिः[1] स्नापयित्वा हिरण्यपत्रमानाभ्यां प्रोक्षयतीति । पूर्वं तथा प्रधानाहुत्वा पुरोदयादादित्यस्य ब्राह्मव्रतं विसृज्य शुक्रियव्रतस्य ग्रहणविसर्गावित्येके । ॥ १३ ॥

दिवि श्रयस्वेत्यहते वाससी गन्धाभरणादीनि च प्रोक्ष्य नमो ग्रहायेति गन्धं गृहीत्वा प्राचीनमञ्जलिं कृत्वाप्सरस्विति गात्राण्यनुलेपयेत्तेजोवत्सत्र[2] इति वस्त्रं परिधाय सोमस्य तनूरसीत्युत्तरीयं गृह्णाति । पूर्ववन्मेखलादीन्याददीताभरणकुण्डलमणीन्बदरेण[3] सुवर्णेन वा कृतानाच्छाद्य दर्भेण बध्नीयात् । ॥ १४ ॥

तदश्मानुपरि धारयन्नायुष्यं वर्चस्यमुच्चैर्वादि शुनमहं प्रियं मेयमोषधीति पञ्चभिर्हुत्वा सम्राजं च विराजं चेत्युदकपात्रे[4] परिप्लाव्य ऋतुभिरिष्टार्तवैरियमोषधीति ताभ्यां कुण्डलाभ्यां दक्षिणादिकर्णयोरलंकरोति । शुभिक इति मणिना कण्ठ-

---

१ स्नामेत्यादिभि॰ Ma; स्नादिभि॰ Ed; स्ना मयोभुव इत्यृग्भि॰ La Vi My.
२ वत्सत्र Ed only; तेजोवत्सवितुः इति La; cp. IX. 2 beg.
३ बाददीत Ed La Vi; बादधीत B; बाददत My.
४ Thus Ma Ed Bh; उदपात्रे Vi My Darpaṇa.

मामुच्येदं ब्रह्म पुनीमह इत्यङ्गुलीयकं गृहीत्वा[1] यदाञ्जनमिति दक्षिणं चक्षुर्यन्मे मन इति वामं चाञ्जनेनाञ्जयित्वेमाः सुमनस इति स्रजमादाय देवस्य त्वेत्यादर्शमवेक्षेत । तेनैव वैणवं दण्डमृजुं गृह्णीयादिन्द्रस्य वज्रो ऽसीति वेगवेजमिति चिरन्माष्ट्र्युपानहावित्युपानहावारुह्य प्रजापतेः शरणं भुवः पुनात्विति द्वाभ्यां छत्त्रं गृह्णीयाद्यो मे दण्ड इति पुनर्दण्डं प्रमादे सत्याहरेत्ततो[2] वाहनं पूजयित्वा प्रतिष्ठे स्थो देवतानामित्यभिमृश्य रथंतरमसीति रथमश्वो ऽसि हयो ऽसीत्यश्वमिन्द्रस्य त्वा वज्रेणेति हस्तिनमारुह्यावतरेदभ्यागतमुत्तमं[3] कन्याप्रदः संस्रवन्त्विति निरीक्ष्य यशो ऽसीत्यावसथे[4] विष्टरं कूर्चं पाद्यमर्घ्यमाचमनीयं मधुपर्कं च संकल्पयति । ॥ १५ ॥

तत्रोपवेश्य राष्ट्रभृदसीति कूर्चं दत्त्वापः पादाविति पादौ[5] सव्यादि प्रक्षालयति । स धौतपादो विराज इति स्वहस्तेन तद्धस्तं परिमृश्य तेनात्मनो हृदयमभिमृशति । ततो मयि तेज इत्यर्घ्यमाचमनीयं चाददीता मा गन्यशसेति मधुपर्कं दद्याद्देवस्य त्वेति प्रतिगृह्य यन्मधुनो मधव्यमिति प्राश्नीयाद्योगे योग इत्याचम्याचमेदमृतापिधानमसीति ।

---

१ After गृ॰ Ed ins. (in brackets) ब्रह्म पुनात्वित्यङ्गुल्यां निक्षिप्य ।

२ Thus B; सति हरेत्त॰ A, L.

३ After उत्तमं Ma ins. स्नातकं, perhaps it is the explanation of उत्तमं ।

४ Thus B and cp. गृहे of the Darpaṇa; आवसथं A, L.

५ Thus Ed only; पादं B L Vi My.

धेनुं बद्ध्वा गौर्धेनुरिति[१] तृणमुष्टिं प्रदाय गौरस्यपहतेति संस्पृश्य तत्सुभूतमिति विसर्जयति । विराज इति पाद्यदानमा मा गन्यश्चेत्याचमनममृतोपस्तरणमसीति मधुपर्कदानं पृथिवीति तस्यान्नसंकल्पनममृतापिधानमसीति मुखवासदानमिति विशेष इत्येके । ॥ १६ ॥

द्यौस्त्वा ददात्विति ब्राह्मणान्भोजयित्वा इन्द्राग्नी मे वर्च इत्येषां[२] प्रणामं कुर्यात्पुण्याहं वाचयित्वाज्येन व्याहृतीर्हुत्वा बान्धवैः सह धाम[३] भुञ्जीत । मधुधाम्नोश्चोदनायां तोयपिष्टौ प्रतिनिधी[४] गृह्णीयाद्यस्मादापो वै सर्वा देवताः सर्वार्थसाधका इति वेद्यर्थं संभारार्थं पृथिवी वनस्पतयः पश्वर्थमोषधय इति वेदानुशासनं भवति । ॥ १७ ॥

अथ प्राणाग्निहोत्रविधानं । स्वयंज्योतिरात्मा यजमानो । बुद्धिः पत्नी । हृदयपुण्डरीकं वेदी । रोमाणि दर्भाः । प्राणो गार्हपत्योऽपान आहवनीयो व्यानोऽन्वाहार्य उदानः सभ्यः समान आवसथ्य इति पञ्चाग्नयो भवन्ति । जिह्वादीन्द्रियाणि यज्ञपात्राणि । रसादयो विषया हवींष्यस्य फलमोमर्यावाप्तिस् । तदेवमेकाध्वर्युरात्मयज्ञं[५] संकल्प्यामृतोपस्तरणमसीत्यन्नं प्रोक्ष्यान्नसूक्तेनाभिमृश्योर्जस्करमित्याधावं पीत्वाङ्गुष्ठानामिका-

---

१ गौर्धेन्विति Ed (properly right !).
२ Thus (एषां) Vi My Bh L ; ०तेषां Ma Ed.
३ Thus Ed Vi L (My omits the word) ; धामं B.
४ Thus Ed, L ; ०निधि the other sources.
५ Only Ed ins. इति after फलमोम्। एकाध्वर्युमात्म० Ed, ०ध्वर्यवमात्म० L.

मध्यमैरादायान्नं प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहोदानाय स्वाहा समानाय स्वाहेति पञ्चाहुतीः पात्रं स्पृशन्नेव हुत्वोर्जस्करमिति पुनस्वाधावं पीत्वाश्नीयादाचम्यापो गृहीत्वादित्याभिमुखमों प्राणानाप्यायस्वेत्युदरमभिमृश्यैदृक्षिणेन[1] कराङ्गुष्ठाग्रेणाणोरणीयानिति दक्षिणपादाङ्गुष्ठे संस्रावयेदेवं सायंप्रातः प्राणाग्निहोत्रं यजेतात्मयाजिनामिदमिज्यमग्निहोत्रं यावज्जीवकमिति ब्रह्मवादिनो वदन्ति। तदेवं भुक्त्वा गच्छन्तमनृणो ब्रह्मपदमभ्येतीति[2] सामपूर्वं माता पिता गुरुर्वा पैतृकादिकमृणत्रयं जायमानस्य ब्राह्मणस्य सहजातमित्युक्त्वा वारयेदिति विज्ञायते[3]। ॥ १८ ॥

## द्वितीयः प्रश्नः समाप्तः ॥

१ Thus (प्राणानाप्यायस्व). Vi and Darpana; प्राणानाप्याय स्वाहेति Ed L My; प्राणाय स्वाहेति Ma.

२ Thus B; ब्रह्माभ्येति पदमिति A L.

३ इति विखनाः प्राह A, L.

अथातः[1] पाणिग्रहणमष्टौ विवाहा भवन्ति ब्राह्मो दैवः प्राजापत्य आर्ष आसुरो गान्धर्वो राक्षसः पैशाच इति। यदभिरूपं वृत्तवयःसंपन्नमाहूयार्हयित्वा कन्यालंकृता दीयते स ब्राह्म इति गीयते। यदृत्विजो यज्ञस्यात्मनोऽलंकृत्य कन्यां प्रतिपादयति स दैवो। युगपद्धर्मानुवर्तिनौ स्यातामिति वाचानुमान्याग्निकार्यं स्वयं कृत्वा यत्कन्यामर्हयित्वा दद्यात्स प्राजापत्यो भवति। यद्गोमिथुनेनैकेन द्वाभ्यां वा कन्यां ददाति तमार्षमाचक्षते। यत्कन्यामाभरणमारोप्य शक्त्या बन्धुभ्यो धनं दत्त्वाहरते[2] तमासुरमामनन्ति। कामयोगो यदुभयोः स गान्धर्वः। प्रसह्य यत्कन्याहरणं स राक्षसः। सुप्तां प्रमत्तां वा रहसि[3] यद्गच्छति स पैशाचो भवतीत्येतेषां[4] प्रथमे चत्वारस्तोयप्रदानपूर्वकाः शस्ता ब्राह्मणस्य नेतरे जघन्या। यस्मात्त्रीन्पूर्वांस्त्रीनपरानार्षीजातः षट् पूर्वान्षडपरान्प्राजापत्येनोढाया जातः सप्त पूर्वान्सप्तापरान्दैवीसुतो दश पूर्वान्दशापरानात्मानं चैकविंशतिकं ब्राह्मीपुत्रः पावयेदिति[5]। ॥ १ ॥

मातुरसपिण्डां पितुरसमानर्षिगोत्रजातां लक्षणसंपन्नां नग्निकां कन्यां वरयित्वा पञ्चाहेषु कुलस्य परिशुद्धौ सपिण्डैः श्रोत्रियैः सह भुक्तं भुञ्जीत। यस्मात्स पूतो भवतीति विज्ञायते। कनिक्रदादिना कन्यागृहं गत्वा प्र सु ग्मन्तेति तामी-

१ अथ Vi My.

२ Thus Vi My; ०हरेत Ed L1; ०हरेत् Ma.

३ हरति B, but the Bh., explaining एकान्ते, points to रहसि।

४ इति om. A L; एषां instead of एतेषां L Vi My.

५ Ma adds विज्ञायते।

च्छित्वा भ्रातृघ्नीमिति तयेच्यमाणो गुरुणाग्निमुखे कृते कन्याप्रदो वरगोत्रनाम शर्मान्तं तथैतामस्य[१] सहधर्मचारिणी भवतीति ब्राह्मे विवाहे धर्मप्रजासंपत्त्यर्थं यज्ञापत्त्यर्थं ब्रह्मदेवर्षिपितृतृप्त्यर्थं प्रजासहत्वकर्मभ्यो ददामीत्युदकेन[१] तां दद्यात् । तां प्रजापतिः स्त्रियामित्युदकेन हरते । वस्त्रगन्धाभरणादीनि संभृत्य कनिक्रदादिना कन्यागृहं सह बान्धवैर्गत्वा तेज आयुः श्रियमिति वस्त्रादिनालंकृत्य प्रजापतिः सोममिति तथाभरणमारोप्याददीतेत्येके[२] । ॥ २ ॥

ततः सह स्नातया वध्वा नववस्त्रालंकारायाः पुण्याहान्ते पाणिं गृहीत्वा सुमङ्गलीरियं वधूरित्यग्निशालामागत्य प्राङ्मुखमासयित्वा तस्यै शुक्लाम्बरवेषः कूर्चं ददाति । ततः परिस्तीर्याग्निरैत्विमामग्निस्त्रायतां मा ते गृहे द्यौस्ते पृष्ठमप्रजस्तां देवकृतमिति पञ्चवारुणान्तं [३]प्रधानाञ्जुहुयादग्नेरपरस्यामास्तीर्णेषु दर्भेष्वश्मानमातिष्ठेति वध्वाः पादाङ्गुष्ठेन दक्षिणेन स्पर्शयति प्रत्यङ्मुख इति पाणिग्रहणं सरस्वतीति विसर्गमघोरचक्षुरित्यासनं च कृत्वेमांल्लाजानित्यभिघार्येयं नारीति तस्या

---

१ The reconstruction of this passage is difficult. The text as given above rests partly on Ed, partly on Ma Vi My; Ma: तथैतां तस्य सहधर्मचरिणी भवति ब्राह्मे विवाहे कृते यज्ञापत्यर्थं ब्रह्मदेवर्षिपितृतृप्त्यर्थं ददामीत्यु०; Ed: तथैतामस्य ब्राह्मे विवाहे धर्मप्रजासंपत्त्यर्थं यज्ञपत्त्यर्थं ब्रह्मदेवर्षिपितृतृप्त्यर्थं प्रजासहत्वकर्मभ्यो ददामीत्यु०; Vi and My: तथैतामस्य सहधर्मचारिणी भवतीति ब्राह्मे विवाहे यज्ञपत्न्यर्थं ब्रह्मदेवर्षिपितृतृप्त्यर्थं प्रजासहत्वकर्मभ्यो ददामीत्यु० L as given in the text, omitting, however, धर्मप्रजासंपत्त्यर्थं ।

२ तथा० Ed, तधा० Ma, तदा० Vi My L.

३ प्रधानं instead of प्रधानान् Ma.

लाजाञ्जलिना जुहोत्युदायुषेत्युत्तिष्ठति । प्रत्यङ्मुख इति वधूमुखेक्षणं सरस्वतीति पाणिग्रहणमघोरचक्षुरिति विसर्गमिमांल्लाजानिति लाजपूरणमियं नारीति होममुदायुषेत्यग्निप्रणामं कुर्यादित्येके । ॥ ३ ॥

विश्वा उत त्वयेत्यग्निं प्रदक्षिणं कृत्वातिगाहेमहि द्विष इत्यासित्वा[1] त्रिधैवं लाजहोमं जुहुयात्ततो मूलहोमान्ते ऽग्निं पतिघ्नन्तं वायुं निन्दितान्तमादित्यं घोरान्तं गन्धर्वं यशोघ्नन्तं चन्द्रं पुत्रघ्नन्तं कृत्वा व्याहृतिः । प्रासावीरित्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा पुनः परिस्तीर्य स्विष्टकृन्मिन्दाहुती विच्छिन्नमृद्धिसप्तसमिद्धाहुतीश्च[2] जुहुयादग्नेरपरस्यामास्तीर्योदगग्रान्सप्त बर्हिषो वध्वा सह दक्षिणेन पादेनैकमिषे विष्णुरिति द्वे ऊर्जे इति त्रीणि व्रतायेति चत्वारीति पञ्च पशुभ्य इति षड्रायस्पोषायेति सप्त सप्तभ्य इति तान्पर्यायेणाक्रम्य गत्वा सखेति निवर्तेत । मम हृदय इति तस्या हृदयमभिमृशति । प्रोक्षणैः प्रोक्ष्य पुण्याहं स्वस्तिघोषेणारुन्धतीन्द्राण्यदितिः श्रीरिवेति वध्वा मनुः प्रजापतिः पुरुषोत्तमो महेन्द्र इवेति वरस्य च[3] चत्वारि स्तोमान्यारोपयेयुरिति पाणिग्रहणं । ध्रुवदर्शनान्तमित्येके । ततः प्रभृति गार्हस्थ्यं धर्ममनुतिष्ठतीति[4] विज्ञायते । ॥ ४ ॥

---

१ Thus Ed Bh ; आसीत Ma ; आसयित्वा L Vi My.
२ Instead of ऋद्धि (thus Ma) Ed : समृद्धौर्, Vi My L समृद्धि ।
३ च not in Ed My ; given by B L (Vi : वरे च).
४ ०तिष्ठेतेति B.

अथ चतुर्थीवासो । वैवाहिकमग्निं[1] वध्वा सहादाय संप्रवाहारयन्निति वधूं सह वध्वेत्यग्निं संग्राह्य दक्षिणं पादमग्रेऽतिहर देहलिं[2] माधिष्ठा इत्यावसथे प्रविश्य प्राच्यामर्धे समादधीताग्निरपरस्यामानडुहं चर्म लोहितं कृष्णाजिनं वा प्राचीनग्रीवमुत्तरलोमास्तृणाति[3] । तत्र प्राङ्मुखमुदङ्मुखं वा वधूमुपवेश्य पतिरिह गावः प्रजायध्वमिति पश्चान्निषीदेतां ज्योतिषां दर्शनाद्वाचंयमावन्यतरानुपेतावासातामुदिते[4] नक्षत्रे प्राचीमुदीचीं वा देवीः षडुर्वीरिति दिशमुपस्थाय मा हास्महि प्रजयेति चन्द्रं सप्तर्षय इति सप्तर्षीन्कृत्तिका नक्षत्राण्यरुन्धतीं च[5] ध्रुवक्षितिरिति ध्रुवं च दृष्ट्वोपतिष्ठेयातां मनोज्ञं तया सह संभाष्याथाग्नेयः स्थालीपाकः । प्रजा स्थालीमिति स्थालीमभिमृश्याग्नये जुष्टं निर्वपामीति स्थाल्यां तण्डुलान्निर्वाप्य वाचस्पतये पवस्वेति वध्वा चरुं श्रपयत्यभिघार्योदगुद्वास्य परिस्तीर्याग्निमुपसमाधाय हव्यवाहमिति स्विष्टकृता यजेत । हुतशेषेण श्रोत्रियं ब्राह्मणं तर्पयित्वा[6] तस्मा[6] वृषभं दत्त्वानृणो भवतीति विज्ञायते । ॥ ५ ॥

---

१ Thus A L ; वैवाहिकाग्निं B.

२ Thus only the Darpaṇa and printed text of Saṃhitā ; देहिलिं Ma ; देहनीं Ed ; देहिनी My ; धेहिनीं Vi ; देहिनीं the Grantha MS. of the Saṃhitā ; देहलीं L.

३ Thus Vi ; ०लोममास्तृ० My L ; ०लोमोपस्तृ० Ma, Ed ; ०लोमं . . उपस्तृ० Bh ( उपरिलोमास्तीर्य Darpaṇa ).

४ Thus ( आसाताम् ) A L ; असताम् Ma, आवसताम् Bh.

५ च only in Ed L and Darpaṇa.

६ तर्पयित्वास्मा B ; ०त्वास्मै वृषभं L.

अत ऊर्ध्वं पर्वणि स्थालीपाकेन यजेत । नित्यं यवैर्व्रीहिभिर्वा हस्तेन सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातराहुती अग्नये स्वाहा प्रजापतये स्वाहेति सायमाहुती जुहुयाद् । अग्न्यन्तरसंसर्गे ऽनुगते वा पत्नी कृच्छ्रं चरति । श्रोत्रियागारान्मथित्वा वाग्निमादाय पुनरौपासनमादधीतो । दक्याशुच्यादिसंसर्गे च विधानं यज्ञप्रायश्चित्ते वक्ष्यामो । वियोगे पत्न्योपावरोहेति समिधं यावल्लक्षणं तावत्तप्त्वा[1] समारोप्य गच्छेद् । इहरहस्तां प्रज्वाल्य हुत्वा तथान्यां समिधं निदधाति । ॥ ६ ॥

पचने वावसथ्ये चरुमभिघार्य वैश्वदेवं । यथा हेति मण्डलं प्रदक्षिणमुपलिप्य परिमृज्याग्नये[2] स्वाहा सोमाय स्वाहेत्युत्तरदक्षिणयोर्मध्ये व्याहृतीर्विश्वेभ्यो देवेभ्यः स्वाहा धन्वन्तरये स्वाहा कुह्वै स्वाहानुमत्यै स्वाहा प्रजापतये स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा व्याहृतीरिमा[3] मे अग्न इति चरुं शेषं जुहुयादग्निहोत्राय स्वाहा वैश्वदेवयज्ञाय स्वाहा ब्रह्मयज्ञाय स्वाहा देवयज्ञाय स्वाहा भूतयज्ञाय स्वाहा मनुष्ययज्ञाय स्वाहा पितृयज्ञाय स्वधा नमः स्वाहा पञ्चमहायज्ञाय स्वाहा व्याहृतीः स्विष्टकृद्व्याहृतीरथ गृहदेवताभ्यो यथादिशं बलिहरणं ब्रह्मणे नमो ब्रह्मपुरुषेभ्यो नमो वास्तोष्पतये नम इति गृहमध्ये । इन्द्राय नम इन्द्रपुरुषेभ्यो नमो यमाय नमो

---

१ तावत् om A L.

२ Thus B; परिषिच्य A L; read perhaps परिमृज्य परिषिच्य ।

३ Here and below व्याहृतीः or °तिः is found in the MSS.

यमपुरुषेभ्यो नमो वरुणाय नमो वरुणपुरुषेभ्यो नमः सोमाय नमः सोमपुरुषेभ्यो नमो ऽग्नये नमो निर्ऋतये नमो वायवे नम ईशानाय नम इति । सर्वं दक्षिणे पितृभ्यो ज्ञातिवर्गपर्यन्तेभ्यः । कृतोपवीती यावन्तो ऽन्नार्थिनस्तावद्भ्यो निर्वपामीति निरुप्याकाशे विश्वेभ्यो देवेभ्यो नमो दिवाचरेभ्यो नमो भूतेभ्यो नमो नक्तंचरेभ्यो नम इत्युच्छीर्षके श्रिया इति । पादतो भद्रकाल्या इति । प्रतिद्वारं पूर्वान्तमुत्तरान्तं वा ध्रुवंगयोर्मरुद्भ्य इति । चुल्ल्याः पक्षयोरग्नय इत्युदधान्यामद्भ्य इति । पेषण्योरुभयोर्दृषद इत्युलूखलमुसलयोर्वनस्पतिभ्य इति । शूर्पे ओषधीभ्य इति । वास्तुपृष्ठे शुनां च पतितानां च श्वपचां पापरोगिणाम् । वयसां च क्रिमीणां च भूमावन्नं वपाम्यहमिति बलिशेषं निर्वपति । पूर्ववत्प्रवाहणं कृत्वा भूतिः स्थेति भस्मालिप्यापो हि ष्ठेति प्रोक्ष्य यत्ते अग्ने तेजस्तेनेत्यग्निमुद्वयमित्यादित्यं चोपतिष्ठेत । नित्यं सायंप्रातः पत्नी वा पुष्टिकामा[1] बलिं हरेद्वैश्वदेवकाले प्राप्तमतिथिं शक्त्या तर्पयेद्वैश्वानरो ह्येष भवति । ॥ ७ ॥

तदेवं त्रिरात्रं हविष्याशिनौ ब्रह्मचारिणौ धौतवस्त्रव्रतचारिणौ स्यातां । ततो ऽपरस्यां रात्रौ चतुर्थ्यामलंकृत्याग्निमुपसमाधाय नव प्रायश्चित्तानि जुहुयादग्ने वायवादित्यादित्य वायवग्ने ऽग्ने वायवादित्य व्याहृतिर्भूर्भुवमिति चतुर्भिर्वधूमूर्ध्नि-

१ Thus B; भूष्णुकामा Ed L, पूष्ण॰ Vi My.

6

ज्येन जुहुयादग्निं प्रदक्षिणं कृत्वा प्राच्यामुदीच्यां वा तामुपवेश्याभिष्ठा पञ्चशाखेनेति योनिमभिमृश्य सं ना मन[1] इत्युपगच्छेदिमामनुव्रतेत्यालिङ्गनं[2] मधु हे[3] मध्विदमिति[3] मैथुनं कुर्वीत । सुप्रजास्त्वायेत्युपगमनं सं ना मन[1] इत्यालिङ्गनमिमामनुव्रतेति वधूमुखेक्षणमित्येके । ॥ ८ ॥

अथ त्रिरात्रमृतौ मलवद्वाससः स्नानाञ्जनादीनि वर्जयेदेकभक्ता[4] स्यादखर्वेणाञ्जलिनायसेन[5] वा पिबेन्न शुल्वेनाश्नाति । न ग्रहानीक्षेत[6] । न दिवा स्वपेद्यथोक्तं व्रतं कुर्याच्चतुर्थ्यां दन्तधावनं गन्धामलकादिभिः स्नात्वा श्वेतवस्त्रानुलेपना स्त्रीशूद्राभ्यामनभिभाष्यापरमदृष्ट्वा भर्तारं पश्येद्यस्मादृतुस्नाता यादृशं पुरुषं पश्येत्तादृशी प्रजा भवति । ऋतुरात्रयो द्वादश भवन्ति षोडशेति चाचक्षते । प्रथमास्तिस्रो न गम्याः । पुमान्समासु विषमासु स्त्री जायते । शालिव्रीहियवानामन्नं पयसा प्राश्नीयाद्यस्मादाहारमूला धातवो

---

१ Thus the Saṃhitā (printed text and Grantha MS.); सन्नाम्न Ma Vi My, सन्नाम मम Ed, सन्नं मन L.

२ The text above given is that of Ma and L, with which the Darpaṇa and the Prayoga agree. A has सुप्रजास्त्वायेत्युपगच्छेत्सन्नाम्न इत्यालिङ्गनम्, but as this is justly (in part at least) the view of the एके (see below), the reading of Ma and L seems to be preferable.

३ Thus only the Grantha copy of the Saṃhitā; the printed text of the S. and A: मधुहेन्म॰, cp. Hir. I. 24. 6.

४ ॰भुक्ता B L.

५ स्यान्न खर्वेणा॰ A L.

६ ग्रहम् instead of ग्रहान् A, गृहं L.

भवन्ति। लक्ष्मीवटशृङ्गसहदेवीनामन्यतममभिषूय[1] प्रक्षिपेद्दक्षिणे नासापुटे पुत्रकामाया वामे स्त्रीकामाया। न निष्ठीवनं कुर्याच्छोकरोषौ वर्जयति। तत[2] एनां[2] यन्मे गर्भादिभिः[3] प्रोक्षणैः प्रोक्ष्य विष्णुर्योनिं कल्पयत्विति तामुपगच्छेत्। परिषिच्य वैश्वदेवं वैष्णवं मूलहोमाङ्गहोमौ[4] हुत्वा विष्णुर्योनिं कल्पयत्वित्युपगमनमित्येके। ॥ ९ ॥

अथ गृहीतगर्भालिङ्गानि शरीराटोपः सक्थिसीदनं द्वेषो भर्तुररुचिराहारो लालाप्रकोपः खरता वाचः[5] स्फुरणं योनेरिति गर्भस्य दैवानुबन्धं ज्ञात्वापूर्यमाणपक्षे पुण्ये पुंनाम्नि शुभे[6] नक्षत्र आज्येनाघारं हुत्वा तां मङ्गलयुक्तामुपवेश्य परिषिच्य धातादि पञ्च वारुणं मूलहोमं स्विष्टाकारं च हुत्वा वृषो ऽसीति यवान्ददाति। पयो दधि घृतं समं गृहीतं त्रिवृदित्यामनन्ति। भूस्त्वयि ददामीत्येनां त्रिवृत्प्राशयेदाचान्ताया नाभेरूर्ध्वमाभिष्ठाहं[7] पराञ्चेति दर्भेण त्रिरुन्मार्ज्य पुण्याहं कुर्याद्ब्राह्मणानन्नेन तर्पयति। ॥ १० ॥

---

१ ॰शुङ्ग॰ A, ॰शृङ्ग॰ B L and Darpaṇa.— ॰न्यतमेनाभिषूय A L, ॰न्यतरमभिषूय B.

२ Thus B; तामेनां A L.

३ Thus Ed L; गर्भादि Ma; गर्भादिभिर्मन्त्रैः Vi My.

४ Thus Ed L; ॰मौ च Ma; ॰होमं Vi My.

५ वाक्स्फु॰ Ma; (॰खरता)स्फुरणं Ed; L Vi My om. वाक् (वाचः my conjecture).

६ शुभे given by L Vi My and Bh.

७ अभिष्ठाहं Ma.

अथ गर्भाधानादिचतुर्थे मासि पुंसवनं भवति । शुक्लपक्षे शुद्धे ऽहनि पूर्वाह्णे ऽग्निमुपसमाधाय पूर्ववत्स्विष्टकारान्तं हुत्वा दक्षिणतो ऽग्नेरपरस्यामासीनाया[१] वृषो ऽसीति सर्षपमिश्रितान्यवानाण्डौ स्थ इति दद्यादलाभे माषधान्यौ प्रतिनिधी स्यातामों भूर्भुवः सुवो राकामहं यास्ते राके सोम एव विश्वा उत त्वयेत्युदरमभिमृशेत्पूर्ववत्त्रिवृत्प्राशनादीनीति[२] विज्ञायते । ॥ ११ ॥

अथ गर्भाधानाद्यष्टमे मासि सीमन्तोन्नयनं कुर्यात्पक्षो दिनं च व्याख्यातं । पूर्ववद्धातादि[३] हुत्वा चैण्या शलल्या सह शलाटुग्लप्सं साग्रपत्रं कुशाङ्कुरं च दर्भेण त्रिराबध्यों भूर्भुवः सुवरिति गृहीत्वा तस्यास्तथासीनायाः स्रग्गन्धवत्याः सीमन्ते राकामहं यास्ते राक इति स्थापयित्वोन्नयनं कुर्यात्सोम एवेति पुरस्तादिव कुर्यात्पूर्ववत्त्रिवृत्प्राशनं पुण्याहान्तमित्येके[४] । ॥ १२ ॥

अथ विष्णुबलिमुत्तरप्रणिधावग्न्यादीन्देवानों भूः पुरुषमों भुवः पुरुषों सुवः पुरुषमों भूर्भुवः सुवः पुरुषं चेत्यावाह्य तथैव निर्वापाद्याघारं[५] हुत्वाग्नेः पूर्वस्यां दर्भासनेषु केशवं नारायणं माधवं गोविन्दं विष्णुं मधुसूदनं त्रिविक्रमं वामनं श्रीधरं हृषीकेशं पद्मनाभं दामोदरमिति नामभिर्देवं विष्णुमावा-

१ ०नाये A L.

२ ०मृश्य instead of मृशेत् B,— प्राशनोन्मर्शनादीनि Ed L My ; प्राशनसमर्शनादीनि Vi.

३ धातादीन् B.

४ एके missing in Vi My.

५ Thus A and L ; निर्वापमाघारं B.

स्नापोहिरण्यपवमानैः स्नापयित्वा तत्तन्नाम्नार्चयत्यतो[1] देवाद्यैर्विष्णोर्नु कं तदस्य प्रियं प्र तद्विष्णुः परोमात्रया विचक्रमे त्रिर्देव इति द्वादशाहुतीराज्येन हुत्वा पायसमाज्यसंयुक्तं हविर्देवं[2] निवेद्य द्वादशनामभिरतो देवाद्यैर्विष्णोर्नुकाद्यैराज्यमिश्रं पायसं[3] जुहुयादृग्यजुःसामाथर्वभिर्मन्त्रैर्वैष्णवैर्देवं संस्तूय नमोऽन्तैर्नामभिः प्रणमेत्पायसशेषं पत्नीं प्राशयति । ॥ १३ ॥

अथ जातकर्म[4] व्याख्यास्यामो । ऽरिष्टागारं यथोक्तं कृत्वा वृषभोषितं तिलसर्षपैर्धूपयित्वा तां प्रवेशयेत्तज्ज्ञाः स्त्रियस्तिस्रस्रतस्रो वा परिगृह्यैनां संवाहयेयुः । कुचौ शिथिले हृदयबन्धं मुक्त्वा सशूले जघने प्रजायत इत्यवधारयेत् । गर्भसङ्गे विशल्यां सुवर्चलां वा योनौ निष्पीड्य निदध्याद्धूपयेत्पिण्डीतकेनाहिकृत्त्या वा योनिं । हरिण्यपुष्प्या[5] मूलं हस्तपादयोराद्धाति । यदा नासाग्रं दृश्यते[6] तदास्य[6] ग्रहस्थितिं ज्ञात्वा शुभाशुभं परीक्षेत । यस्मात्तद्गुणान्वितं[7] वर्धयेज्जायमाने मातुरुदकुम्भं दक्षिणतः शिरोभागे स्थापयित्वा ततस्तूर्यन्तीं पादतो[8] निधाय यथैव सोमः पवत इत्युदरमभिमृशेत्कुमारे

---

१ तत्तन्ना॰ Ed and Darpaṇa ; तन्नाम्ना॰ the other MSS.

२ हविर् instead of हविर्देवं Ma only.

३ च ins. Ma and Darpaṇa.

४ जातकं A.

५ Thus Ed ; पुष्पया Vi My ; पुष्प Ma L.

६ दृश्येत्तदास्य all, only Darpaṇa दृश्यते ।

७ Thus B and L ; ॰न्वितो A.

८ Missing in A (पादयोः Darpaṇa) and L, where, instead of ततस्, we find सत्तस् ( read पत्तस् ? ).

जाते द्वारवामे ऽश्मनि परशुं तस्मिन्हिरण्यं स्थापयित्वाश्मा भवेत्यधरमुत्तरं करोति तस्योपर्यङ्गादङ्गादिति कुमारमेकया स्त्रिया धारयेत्तमद्भिरभ्युक्ष्य तिलदे ऽवपद्यस्वेति सतिलमक्षतं मूर्ध्न्याधायौपासनमरण्यां निर्हरति। ॥ १४ ॥

चुल्ल्यां कपालमारोप्य वृषभशकृत्पिण्डैर्जातकाग्निं साधयेत्तमेनमुत्तपनीयमित्युदाहरन्ति। तेनैव धूपं दद्याद्द्वारस्य दक्षिणतो निधायाङ्गारवर्णे परिस्तीर्य कणसर्षपैर्हस्तेन[1] शण्डे रथो ऽयः शण्डो मर्क आलिखन्विलिखन्नर्यम्ण आन्त्रीमुखः केशिनीरेताघ्नतैतान्पूर्वं एषां मिश्रवाससो नक्तंचारिणो निशीथचारिणो तासां त्वमयं ते योनिर्मम नामेति व्याहृतीश्च हुत्वा प्रक्षाल्य पाणिमवनीमालभ्य यत्ते सुसीम इति मेधायै घृतं करोति। वचा पथ्या हिरण्यं मधु सर्पिरिति मेधाजननानि[2] भवन्ति[2]। ब्राह्मीघृतं[3] पयो वचाधिकं चामनन्ति। सुवर्णं दर्भेण बद्ध्वान्तर्धाय घृतं भूस्त्वेच इति प्राङ्मुखं प्राशयति। नित्यं सायंप्रातरेवमहरहर्हुत्वा[4] मेधायै पाययेत्। दुष्णशीताभिरद्भिरेनं स्नापयित्वा क्षित्यै त्वेति नीत्वा या दैवीरिति मातुरङ्के[5] स्थापयित्वा[6] तासां त्वेति स्तनौ[7] प्रक्षा-

१ A and L ins. जुहोति, but afterwards (line 11) हुत्वा follows.
२ ०जननी भवति B.
३ Thus A L and Darpaṇa ; ब्राह्मि० B.
४ एव instead of अहरहः B.
५ Thus B and Darpaṇa ; उपस्थे instead of अङ्के A and L.
६ स्थापयति A and L.
७ Thus B and Darpaṇa ; स्तनं A L.

ल्यायं कुमार इति दक्षिणादि पाययेदापो हविष्ष्विति न्यस्तमुदकुम्भं शोधयित्वा नित्यं सायंप्रातरादधाति । तथैव घृतप्राशनान्तं कर्म कृत्वा स्नात्वौपासननिर्हरणादि[१] करोतीत्येके । तृतीये पञ्चमे सप्तमे[२] नवमे चाह्नि शयनादिकं शोधयतीति[३] । ॥ १५ ॥

अथ वास्तुसवनं व्याख्यास्यामो । नवे वास्तुन्युषिते[४] ऽपि[५] सूतकप्रेतकयोर्वापयित्वा मृन्मयानि भाण्डानि पुराणानि त्यक्त्वा नवानि परिगृह्यान्यान्परिच्छदान्यथोक्तं शोधयित्वा[६] भूमियज्ञेनेष्ट्वा निवसेद्यस्माद्वास्तुसवनेन शुद्धिर्वस्तूनामाधारो वास्तुसवनस्य । वास्तोष्पते प्रतिजानीहि वास्तोष्पते शग्मयेति द्वाभ्यां यजेत भूमियज्ञाय स्वाहा यज्ञदैवतं प्रसोदर्यै स्वाहेति द्वौ भूमियज्ञदैवत्यौ मेदिनी देवी देवी हिरण्यगर्भिणी समुद्रवती सावित्री शृङ्गे शृङ्गे वायुपरी जलशयनीति पञ्च भूमिदैवत्या व्याहृतीर्हुत्वा पुण्याहमहमग्ने अग्निं गृह्णामीत्यग्निष्ठाद्दर्भपूलेनाग्निं गृहीत्वा प्रथमादैन्द्राद्ध्रुवंगादारभ्य वास्तुनः कुड्यमूलाद्बहिरन्तश्च वामं परीत्या ब्रह्मस्थानात्पर्यग्निं कारयित्वापरद्वारेण विसृजेत्तथैवाणोरणीयानिति पात्रेणान्वपः

१ ॰णादिकं Ed and L.

२ Om A and L; also according to the Darpaṇa the word belongs to the text.

३ Thus Ma; शोधयति Ed; शोधयेदिति L Vi My.

४ ॰षीते Vi My.

५ पि om B.

६ शोधयेत् B.

स्नावयित्वा शिष्टाभिः सर्वत्र प्रोक्षयत्येवं वारुणाद्भुवंगाद्या[1] याम्यात्सौम्यादारभ्य[1] पर्यग्न्याधावस्तुती[2] स्याताम् । ॥ १६ ॥

ये ते शतं[3] वरुणोदुत्तममयास्याग्न आपः सृजन्तु स्निग्धानीति चत्वारो वरुणदैवत्या । विश्वे देवस्य विश्वे अद्येति द्वौ वैश्वदेवावतो देवा इदं विष्णुस्त्रीणि पदा विष्णोः कर्माणि तद्विष्णोः परमं तद्विप्रास इति षड्वैष्णवा द्वावाद्यावित्येके । रुद्रमन्यं त्र्यम्बकमिति द्वौ रुद्रदैवत्यौ । ब्रह्म जज्ञानं हिरण्यगर्भ इति द्वौ ब्रह्मदैवत्यौ । मिश्रवासस एतान्नतैतानिति द्वौ कौबेरौ । युवमेतान्यग्नीषोमावान्यं दिव इति त्रयो ऽग्नीषोमीया । बृहस्पतिर्देवानां बृहस्पतिः सोमं बृहस्पते अति यदुपयामगृहीत इति चत्वारो बार्हस्पत्याः । त्रातारमिन्द्रं महाँ इन्द्रो य ओजसा महाँ इन्द्रो नृवद्भुवस्त्वमिन्द्रेन्द्र सानसिं प्र ससाहिषे ऽस्माकमिन्द्रो भूतस्येन्द्रो द्यौरिन्द्रं प्रणवन्तमिन्द्रो वृत्रमिन्द्रो बभूवेन्द्रो ऽस्मानिति[4] त्रयोदशैन्द्राः । यमो दाधार नमस्ते निर्ऋतय इति द्वौ याम्यौ । मित्रस्य चर्षणीधृतो मित्रो जनान्प्र स मित्रेति त्रयो मैत्राः । भूमियज्ञदैवत्याद्यो व्याहृत्यन्ता इज्यन्ते । तस्माद् ध्युत्तरं शतमाहुतयो वास्तुसवनस्यान्तहोममिति विज्ञायते । ॥ १७ ॥

---

१ Thus (भुवङ्गाद्यायाम्यात्) B; भुवङ्गाद्यायम्यात् Ed; ॰गाद्याम्यात् L Vi My.
२ ॰ष्टुती Ma only.
३ All (also the Darpaṇa) एते शतं।
४ A and L स्माकमिति (!).

अथ दशमे द्वादशे वाह्नि भवत्युत्थानं। तथैव जातकाग्निं समारोप्य यावन्त्यस्य कर्माणि तानि सर्वाणि मथित्वास्मिन्नेव कुर्याद्विसृज्य लौकिकाग्नावित्येके। स्नात्वागारं यथोक्तं शोधयेत्[1]। क्षुरकर्मादिना शुद्धो भूमियज्ञमसगोत्रेण याजयेदित्येके[2]। तथा हरणमौपासनस्य धातादि पञ्च वारुणं मूलहोमो भोजनं ब्राह्मणानाम्। ॥ १८ ॥

अथ नामकरणमा चत्वारिंशद्दिवसादा पञ्चाशद्दिनाद्वा पाके नैनां नियुञ्जीत[3]। तत्रैव[3] शुभे पुंनाम्नि नक्षत्रे परिस्तीर्याग्निं तथासीनस्याक्षतं कुमारस्य मूर्ध्नि विन्यस्य पञ्च वारुणं प्राजापत्यं स्विष्टाकारं च हुत्वास्य[4] पूर्ववत्त्रिवृत्प्राशनं। दीर्घान्तमभिनिष्ठान्तं वा घोषवदाद्यन्तरं द्विप्रतिष्ठितान्तस्थं सृष्टाक्षरपदस्वरं द्विवर्णं चतुर्वर्णं वा नाम शस्यते। यथोक्तं मम नाम प्रथममिति गोत्रनामयुक्तं तदर्हं नाम कुर्यात्। द्वे[5] नामनी तु[5] नक्षत्रनाम रहस्यमग्न्याधानात्परमाहिताग्न्यादिस्वकर्मान्तं प्रकाशं नाम भवेदक्षतोदकपुष्पान्नरसगन्धसमैः पाणिभ्यां दक्षिणेतराभ्यां कुमारस्य शाङ्करिरिवेति कन्याया[6] नन्दे-

---

१ Thus Ma La Vi My; शोधयित्वा Ed Bh.

२ Thus B and La; याजयतीत्येके Ed; याजयतेति Vi My.

३ नियुञ्जेत्तत्रैव Ma, नियुञ्जेदत्र Bh.

४ Thus A; जुहुयादस्य Ma La; जुहुयात्, without अस्य Bh; अस्य seems to be superfluous.

५ द्वे नाम्नीति A; द्वे नामनी इति La.

६ कन्यकाया B.

वानन्ददायिनीति वदन्पादत[1] आरभ्य क्रमेण देहाङ्गसन्धौ शिरसि च निक्षिपेत्पुण्याहम् । ॥ १९ ॥

अथ वर्षवर्धनं । दारकस्य जन्मनक्षत्रं यद्दैवत्यं सास्य देवता प्रधाना भवति । तस्मादाघारं कृत्वा तदधिदेवता[2] नक्षत्राणि च जुहुयादग्नये कृत्तिकाभ्यः प्रजापतये रोहिण्यै सोमाय मृगशीर्षाय रुद्रायार्द्राया अदित्यै पुनर्वसुभ्यां बृहस्पतये तिष्याय सर्पेभ्य आश्रेषाभ्यः पितृभ्यो मघाभ्यो ऽर्यम्णे फल्गुनीभ्यां भगाय फल्गुनीभ्यां सवित्रे हस्ताय त्वष्ट्रे चित्रायै वायवे निष्ट्याया[3] इन्द्राग्निभ्यां विशाखाभ्यां मित्रायानूराधेभ्य इन्द्राय ज्येष्ठायै प्रजापतये[4] मूलायाद्भ्यो ऽषाढाभ्यो विश्वेभ्यो देवेभ्यो ऽषाढाभ्यो ब्रह्मणे ऽभिजिते विष्णवे श्रोणायै वसुभ्यः श्रविष्ठाभ्यो वरुणाय शतभिषजे ऽजायैकपदे प्रोष्ठपदेभ्यो ऽहये बुध्नियाय[5] प्रोष्ठपदेभ्यः पूष्णे रेवत्या अश्विभ्यामश्वयुग्भ्यां यमायापभरणीभ्यः स्वाहेति व्याहृतिः[6] । ॥ २० ॥

ऋषभं वैरवणमग्नीषोमीयं[7] वैष्णवं धातादि मूलहोमं यद्देवादि कूश्माण्डहोममा सावित्रव्रतबन्धाज्जुहोत्युपनीतस्य च

---

१ पत्त instead of पादत Ed My La.

२ तदादिदेवता B and Ed.

३ Thus Ma and printed text of Saṃhitā; स्वात्या Ed La and Grantha copy of Saṃhitā; स्वात्यै Vi My.

४ निर्ऋतये instead of प्रजापतये A La and Grantha copy of Saṃhitā.

५ बुध्न्यै Ma La Vi My.

६ Thus Ma La Ed Vi, ०तीः My.

७ Thus La Ed Darpaṇa and both texts of the Saṃhitā; वैरमषं Ma Vi My.

तत्तद्भूतसूक्तानि । वेदस्नातकस्य यदह्नि विवाहो भवति मासिके वार्षिके चाह्नि तस्मिन्यत्स्त्रिय[1] आहुः पारंपर्यागतं शिष्टाचारं तत्तत्करोति[2] । तथाग्निष्टोमादियज्ञानामाधाननक्षत्रे वर्षान्ते करोति । तदेवं वर्तमानस्य यद्यष्टमासाधिकाशीतिवर्षाणि ऽविवर्षेणाधिगान्यधिगच्छेयुः[3] स दृष्टसहस्रचन्द्रो भवति । तमेनं क्रियायुक्तं पुण्यकृत्तमं ब्रह्मशरीरमित्याचक्षते । तस्मान्नान्दीमुखं कृत्वा शुक्लपक्षे शुद्धेऽहनि पूर्वाह्णे पुर्ववद्धुत्वा तथैव कपिल इवेति वृद्धस्य वृद्धाया वा वदन्नक्षतोदकादीन्मूर्ध्न्यादध्यात्सर्वदेवताः सहस्रं च ब्राह्मणानामर्चनबलिभ्यामन्नेन तर्पयेत् । ग्रामं प्रदक्षिणीकृत्य सायं स्थण्डिले सहस्रं पिष्टेन सोमरूपाणि करोति । राजतेन पात्रेण कुमुदपत्रैः सोमस्यार्चनं । तस्य दक्षिणे रोहिणीगणं वामे चानावृष्टिगणमर्चयति । सहस्रशः सुवर्णरजतमुक्तादीनि शक्त्या वस्त्रतण्डुलापूपानि च दद्यादश्वमेधफलावाप्त्यै वर्षवर्धनमिति विज्ञायते । ॥ २१ ॥

अथ षष्ठे मास्यन्नप्राशनं । शुक्लपक्षे दिने शुद्धे तत्राज्येनाघारो । धातादि मूलहोमं पूर्ववत्त्रिवृत्प्राशनं । प्राङ्मुखं मङ्गलयुक्तं कुमारं विष्टरमारोप्य भूरपामिति पायसमन्नं प्राशयेद्योगे योगे तवस्तरमित्याचमनं दद्यादथ प्रवासागमनं ।

---

१ यस्मिन् instead of त॰ B.
२ तत्करोति A
३ ॰धिकान्यधि॰ A La.

पुष्पापूपदक्षिणादिसंभारान्कुमारं[1] च गृहीत्वा कनिक्रदादिनालयं गुहस्य गच्छेत्प्रदक्षिणमर्चनं प्रणामो गुहस्य । तच्छिष्टेन पुष्पादिना गुहस्य शेषमिति तन्नामोह्वित्वा[2] बालमलंकृत्य शान्तिं वाचयित्वा निवर्तयेत्प्रोष्यागतं सोमस्य त्वेत्यङ्कमारोप्यायुषे वर्चस इति पिता मूर्ध्नि जिघ्रेत् । वृषभं नमस्कृत्य दक्षिणपाणेः[3] साङ्गुष्ठमङ्गुलीर्गृहीत्वा कनिष्ठाद्यग्निरायुष्मानित्यादिकैर्विसर्जनमायुष्टे विश्वतः प्रतिष्ठ वायाविति दक्षिणादिकर्णयोर्जपनमुदङ्मुखं ब्रह्मादिदेवानां गुरूणां च प्रणामं कारयेत् । पादोदकं दत्त्वा पूर्ववत्सगुडभक्ष्यस्यान्नस्य सपिण्डैः श्रोत्रियैः सह भोजनं । स्वस्तिवाचनं[4] । पिण्डवर्धनमिति विज्ञायते । ॥ २२ ॥

अथ वर्षे प्रथमे तृतीये वा चौडकमुत्तरायणे पक्ष आपूर्यमाणे पुंनामन्याघारो । मूलहोमान्ते मङ्गलयुक्तमग्नेरपरस्यां कुमारमुपवेश्योत्तरे साक्षतं गोशकृच्छरावे गृहीत्वा माता ब्रह्मचारी वा धारयेच्छिवो नामासीति ग्रहणं क्षुरस्य । शिवा नो भवयेति शिलायां तीक्ष्णीकरणं । गोदानमुनक्तीति गवादिदक्षिणाकरणमपि उन्दन्त्वित्यपां सेकं शिरस्योषधे त्रायस्वैनमिति साक्षताङ्कुरदर्भौ प्रागुत्तराग्रौ मस्तके स्थापयेत्स्वधिते मैनꣳ हिंसीरिति क्षुरं निधायोर्ध्वाग्रमोषधी-

१ संभारं instead of संभारान् A.
२ तन्नाम्नोह्वित्वा A.
३ पाणौ B.
४ ०वाचनं A La and Darpaṇa ; ०वचनं B

रिति[१] येनावपदिति येन पूषेत्यषावायुषेति पूर्वादिप्रदक्षिणं दर्भं सरोमाणं छित्त्वा ज्योक् च सूर्यं दृश इति चूडां विभजेदृषिक्रमेण स्वस्यैकार्षद्व्यार्षत्र्यार्षपञ्चार्षसप्तार्षाञ्चूडा[२] विभजेदनुदितस्यैकामिदमहममुष्येत्युदुम्बरदर्भयोर्मूले[३] गोष्ठे वाच्छादयेत्स्नातं[४] वस्त्रादिनालंकृत्योपवेश्य दक्षिणे पञ्च प्रायश्चित्तादि धातादि पञ्च वारुणं मूलहोमं कृत्वा पुण्याहं कृत्वा नापितायान्नदानं गवादिदक्षिणां गुरवे सुराणां पूजनं तर्पणं ब्राह्मणानामन्नेन करोतीत्यष्टादश संस्कारा: शारीरा: ॥ २३ ॥

## तृतीय: प्रश्न: समाप्त: ॥

---

१ Thus Ma La; ०शा श्वोषधी० Ed and printed text of Saṃhitā; ०र्ध्वं ग्रामोषधी० My and Prayoga; ०र्ध्वं ग्राम श्वो० Vi; र्ध्वाग्रमो also the Grantha text of S.

२ Thus my conjecture; सप्तार्षां चूलां La Ed; सप्तार्षचूडां Vi; सप्तार्षाचूडा My; सप्तार्षेया चूडा: Ma.

३ विभजति instead of ०जेत् B, विभजन्ति La Vi My; एकाम् om. Ma La.

४ वा गूहये० B.

अथ[1] स्थालीपाकमग्नेः पश्चिमतस्तिष्ठन्प्राङ्मुखः प्राणायामं धारयत्यैकविंशतीध्मान्संनह्य[2] दर्भान्[3] दर्वीस्रुक्स्रुवप्रणीताज्यस्थालीचरुस्थालीरग्नेरुत्तरे ऽवाङ्मुखं[4] संन्यस्योद्धरेत्यग्निमुद्धार्येन्धनैरिन्धयेद्वेदिं[4] परिमृज्य प्रागाद्युत्तरान्तं दर्भानास्तीर्येध्मादीनग्निकुण्डं च प्रोक्षयति । प्रणीतामासाद्य पवित्रं निधायाद्भिः पूरयति । पृथिव्यापो ग्रहीष्यामीति पूर्ववदुत्पूयोत्तरे निधायाज्यस्थालीं गृहीत्वा पूर्ववदाज्यं संस्कृत्य चतुर्थीवदाग्नेयं चरुं स्थाल्यां पक्त्वाग्निं परिसमूह्य देवस्य त्वेति दर्वीमादाय प्रक्षाल्योत्तराग्रं निधाय परिषिच्येध्मान् गृहीत्वाज्यमनक्त्यैकमनूयाजमपोह्य त्रीन्परिधीनाघारौ च पूर्ववन्निधाय शेषान्पञ्चदशेध्मान्प्राणायामेनाग्नौ क्षिपत्याज्येनाघारौ संस्राव्य[5] हुत्वाग्नये सोमायेति जुहोति । दर्व्या चरुं गृहीत्वाभिघार्यावदानं गृहीत्वाग्नये स्वाहाग्नये स्विष्टकृते स्वाहेति हुत्वाचानूयाजमग्नौ प्रक्षिप्य प्राजापत्यं जयान्व्याहृतीश्च । पाहि नो अग्न एनसे पाहि नो विश्ववेदसे यज्ञं पाहि विभावसो सर्वं पाहि शतक्रतो कामावकीर्णः कामाभिद्रुग्धः सं मा समुद्रादिति स्विष्टाकारं च जुहोति । परिषिच्य प्रणिधिं[6] चालयति[7] ।

---

१ अथ पर्वणि Ma La Ed, पर्वणि not in Bh Vi My.
२ Thus B; संगृह्य A La.
३ दर्भ॰ A La.
४ ऽवाङ्मुखान्न्यस्यो॰ B.
५ स्राव्य B.
६ ॰धीं Vi My.
७ चलयति La.

[1]भस्मालिप्यात्मानं प्रोक्ष्याग्निं वैश्वानरसूक्तेनोपस्थाय प्राणायामेन दर्भांश्चतुर्दिशमुत्थाप्याद्भिः प्रोक्ष्य द्वावपोह्यान्यानाप्यायन्तामिति जुहोति । द्वावपि गृहीत्वाद्भिः प्रोक्ष्याग्नये स्वाहा सोमाय स्वाहेति हुत्वा त्रीन्परिधीनाघारसमिधौ च जुहुयाद्धोर्मं कर्तुमशक्तः समिधि स्वात्मन्यरण्यां वा समारोपयेदिति विज्ञायते । ॥ १ ॥

अथ सति व्रीहिनीवारश्यामाकयवानामाग्रयणे देवताभ्यः स्थाल्यां चरुं पक्त्वा नवेन तण्डुलेन पक्केनापि[2] जुहोत्यग्नये स्वाहेन्द्राग्निभ्याꣳ स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सोमाय स्वाहा द्यावापृथिवीभ्याꣳ स्वाहाग्नये स्विष्टकृते स्वाहेति[3] शतायुधाय ये चत्वार इति पितृभ्यः सोपवीती ग्रीष्मो हेमन्त इदुवत्सराय भद्रान्नः श्रेय इत्यायुष्या इत्यादिभिस्त्रिभिर्व्याहृत्यन्तं[4] हुत्वा दक्षिणे धरण्यां पितृभ्यो बलिदानमाप्यायन्तामिति तण्डुलैरास्यमभिपूर्याचम्य शिष्टैरन्तर्वंशे[5] परमेष्ठ्यसीति विकिरति । तदेवं शालीनयायावरादिवृत्त्यन्तरमाश्रित्य[6] गार्हस्थ्यं धर्ममनुतिष्ठतीति विज्ञायते । ॥ २ ॥

अथाष्टका[7] । माघप्रौष्ठपदयोरपरपक्षे[8] ऽष्टम्यामष्टकां कुर्यात् सप्तम्यां नवम्यां त्रयोदश्यां वा । सायं पूर्वेद्युः स्वाध्यायाचार-

१ भूति स्थेति ins. Ma.
२ अपि missing in B.
३ जुहोति ins. A La.
४ त्रिभिः om A La.
५ अवशिष्टै० B.
६ शालिन० B La.
७ These two words not given by Ma; अथाष्टकां La.
८ प्रोष्ठ० all exc. Ed.

ततः शुचीनसगोत्राञ्ब्राह्मणानाहूयाभिपूज्य युग्मान् द्व्यवरान्विश्वेदेवार्थे त्र्यवरानयुग्मान्पित्रर्थे द्वयोरेकैकं वा निमन्त्रयेद् । परेद्युरपराह्णे देशे शुचावाधायौपासनाग्निं[1] वैश्वदेवाघारं[2] हुत्वा स्थालीं संक्षाल्य[3] विश्वेभ्यो देवेभ्यो[4] जुष्टमिति[4] स्थाल्यां तण्डुलान्निर्वाप्य[5] सतिलं चरुमपूपान्यपि पचेदग्नेर्दक्षिणस्यां नान्दीमुखवन्मण्डलान्युपलिप्यास्त्वासनमित्यासनानि[6] सदर्भतिलेष्वासनेष्वासयित्वा[6] वस्त्राद्यैरलंकृत्य ब्राह्मणान्प्रत्यङ्मुखान्विश्वेदेवानुदगन्तं पुष्पाद्यैः पितॄनुदङ्मुखान्प्रागन्तं गन्धाद्यैः पूजयति । स्वधा नम इत्युक्त्वा तेषां करे तिलोदकं दत्त्वा प्राप्नोतु भवानिति ब्रूयात् । ओं तथा प्राप्नवानीति प्रतिब्रूयुरग्नौ[7] होमं करिष्यामीत्युक्ते[8] कुरुष्वेति तैरनुज्ञातो ऽग्निं परिषिच्य विश्वे देवस्य विश्वे अद्य प्रजापते न त्वतुभूः स्वयंभूः सं ते पयांसि सोम यास्ते[9] इति रौद्रं ब्राह्मं वैष्णवं व्याहृत्यन्तं

---

१ ०नाग्नौ A.
२ वैश्वदेवमाघारं B.
३ प्रक्षाल्य Ma.
४ देवेभ्यो जुष्टं निर्वपामीति Ed La My.
५ Thus A La and Prayoga; निरूप्य B.
६ ०लिप्यनिदर्भ तलेष्वासयित्वा Ma; ०लिप्यास्त्वासनमित्यासनानि सदर्भतिलेष्वासने० Vi My La and thus also Ed, which, however, puts into brackets the words आस्त्वासनमित्यासनानि ।
७ प्रति om. Ma Ed; it is added above the line in Vi.
८ उक्ता B.
९ After यास्ते La Vi My ins. या ते धामानि, Ed. puts these words in brackets.

देवानां सपिण्डीकरणवत्पितॄणामप्याज्येन[1] हुत्वा हव्यं कव्यमित्यभिघार्य पक्वेनापूपमिश्रेण जुहोति । गामुपाकृत्य पशुबन्धवत्संज्ञप्तोत्खिद्य[2] वपामुद्धृत्य पक्वया तया वह वपामिति होमं चामनन्ति । ॥ ३ ॥

दक्षिणपश्चिमे ऽग्नेरेकोद्दिष्टवन्निर्वापस्थानं तद्दक्षिणस्यामवटं चोपकल्प्योद्धन्यमानमिति दर्भैस्त्रिभिर्दक्षिणान्तं सकृदुल्लिखेत् । गायत्र्या प्रोक्ष्य स्थाने निहन्मि सर्वमिति दक्षिणाग्रानयुग्मानुदुम्बरपत्त्रदर्भांस्तिलैरास्तृणाति[3] । पोषाय त्वेति सकूर्चाक्षतं पात्रमुदकेनापूर्य पितरो मे प्रसीदन्त्विति प्रणम्या म आगन्त्विति पितॄनावाह्य दक्षिणाभिमुखो ऽभ्यर्चयत्या मा वाजस्येति पात्रं प्रमार्ज्याग्निरिन्द्रेति चरुं निर्वपति । दर्भेण तमष्टधा विभज्य साज्यं पिण्डान्कृत्वा सव्योत्तरपाणिभ्यामयमोदन इति पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो ज्ञातिवर्गेभ्यः पितृपत्नीभ्यः पितामहपत्नीभ्यः प्रपितामहपत्नीभ्यो ज्ञातिवर्गपत्नीभ्यः पिण्डं निर्वपामीति निर्वपत्येवं मातुः पित्रादिभ्यः पिण्डदानं केचिद्ददन्त्यञ्जनदन्तधावनदधिसक्तुमधुव्यञ्जनेक्षुबदरीफलान्यर्पयेच्छूर्पेणाच्छाद्योपरि[4] पुष्पतिलाक्षतदर्भान्न्यसेदूर्जं वहन्तीरिति[5] परितः स्राव्योदकं[5] दत्त्वामूर्तीनामिति तत्पात्रोदकेनावटं पूर-

१ ह्यपि om B.

२ ॰संज्ञप्तोत्खि॰ all exc. Bh.

३ ॰युग्मान्युदुम्बर॰ Ma, ॰युग्मोदुम्बर॰ A La.

४ ॰बदरफ॰ B.

५ ॰ति पिण्डान्परितः स्राव्यो॰ A La; ॰ति परितः प्रस्राव्यो॰ Ma; Bh. also -स्राव्य ।

यति । चरुशेषेणान्यैश्चान्नाद्यपूपोपदंशैः पूर्ववद्ब्राह्मणान्यथातृप्ति भोजयेत्तेषु तृप्तेषु पितरस्तृप्ता[1] भवन्ति । वाग्यतान्भुञ्जानानृचः पैतृकाः श्रावयेदुच्छिष्टं संशोध्य तत्रान्नं विकिरेदाचान्तेभ्यो मुखवासं निवेद्य रजतं तिलं सुवर्णं वा दक्षिणां पशुकांस्य-यानदासशयनासनादीनि परिच्छदांश्च यथाशक्ति ददात्यन्नशेषं तेभ्यो दर्शयित्वा यथोक्तं करणीयमाचमनोच्छिष्टशोधनो-त्थापनविसर्जनादन्यद्विश्वेदेवपूर्वमाचरेदन्यथा[2] रक्षांस्यपहरेयु-र्नमो वः पितरः इति पितॄनभिवन्द्य पिण्डानुद्वासयेदस्तु[3] तृप्तिरा मा वाजस्येति भुक्तवतस्तान्नमस्कृत्योत्तिष्ठतेत्युत्थाप्य परेत पितर इति प्रवासयति । पितृभुक्तं पितृजीर्णमित्यन्त-होमान्ते[4] ऽग्निमालये प्रतिष्ठाप्य पञ्च महायज्ञान्करोति । दरिद्रो ममेयमष्टकेति कक्षमग्निना दाहयेच्छ्रोत्रियाय पानीयं वा दद्यादिति विज्ञायते । ॥ ४ ॥

अथातो ऽमावास्यायां पिण्डपितृयज्ञं यजेत । पूर्वे ऽहन्यपां मेध्यमिति समूलं बर्हिराहृत्य सकृदेवाच्छिद्य सकृदाच्छिन्न-बर्हिषः समाहरत्युपोष्य श्वो भूते ऽपराह्णे ऽग्निं प्रणम्य प्राचीनावीत्यध्वर्युर्दक्षिणाग्नेर्दक्षिणपश्चिमस्यां चरुस्थाल्याज्यस्थालीस्रुक्-

---

१ पितरः सुतृप्ता La Vi My.

२ ॰पूर्वमा॰ La Vi My Bh; ॰पूर्वकमा॰ Ma; Ed. omits this word.—आचरति instead of आचरेत् A La.

३ उत्थापयेत् instead of उद्वासयेत् Ma alone.

४ After ॰जीर्णमिति Ed ins. उपजुह्वा हुत्वा; La Vi read उपजुह्वान्त-होमान्ते; My ins. उपजुह्वा।

स्रुवेध्ममेक्षणेडापात्रस्फ्यशूर्पोलूखलमुसलादिपात्राण्येकैकशः[१] प्रयुञ्जीत । अपहता असुरा इति वेदिं परिमृज्यायात पितर इति दक्षिणाग्निं सकृदाच्छिन्नबर्हिषा परिस्तृणाति । पितृभ्यो जुष्टं निर्वपामीति स्थालीं सपवित्रां व्रीहिभिरापूर्य तेनैवाभिमृश्य तथैव ताञ्छूर्पे निरुप्याभिमृश्येदन्वाहार्यस्य[२] दक्षिणस्यां[३] पश्चिमस्यां[३] वोत्तरपश्चिमग्रीवं[३] कृष्णाजिनमास्तीर्योर्ध्वमुलूखलं[४] संस्थाप्य व्रीहीन्प्रक्षिप्य पत्न्यवघातं कृत्वा विवेचनवर्जं परावापं सकृत्करोत्यध्वर्युः स्थाल्यां तण्डुलानद्भिः सकृत्परिक्षाल्यान्वाहार्ये[५] जीवतण्डुलमस्विन्नं चरुं श्रपयेद्दक्षिणतः स्थालीं मेक्षणं च[६] दर्भेष्वासाद्यानुत्पूतसर्पिषा पक्वमभिघार्य शुन्धन्तां पितर इति वेद्यां परितः कूर्चेनापः स्रावयेत्सोपवीती दक्षिणाग्नाविध्मान्हुत्वा मेक्षणेन चरुमभिघार्यावदायाग्नये कव्यवाहनाय स्वधा नमः स्वाहा सोमाय पितृमते स्वधा नमः स्वाहा यमाय चाङ्गिरस्पतये स्वधा नमः स्वाहेति जुहोति । तदग्नेः सधूममेकमुल्मुकमुद्धृत्यापयन्त्वसुरा[७] इति पश्चिमतो वेद्यां संन्यस्य निर्धूमं तं विसृजेत् ॥ ५ ॥

---

१ ०मेक्षणदर्वीडपात्र० Ma, मेक्षणं दर्वीडपात्र० Bh.

२ ०न्वाहार्यदक्षि० A La.

३ पश्चिमस्यां वा om. A La.

४ La and A (but of these Ed in brackets) ins. मुसलं च ।

५ परि om. B.

६ च in Vi and My only.

७ एकमुल्कम् La Ed, एकमुलमुकम् B, एकामुल्कास् Vi My

यजमानः प्राचीनावीती दक्षिणपूर्वं स्फ्येनैवोल्लेखनं कृत्वा तत्राद्भिः प्रोक्ष्य स्फ्यं निधाय तस्मिन्नूर्ध्वोदकान्त इत्युदकेन तर्पयित्वा पश्चिमे सकृदाच्छिन्नबर्हिषि पितृन्पितामहान्प्रपितामहानभ्यर्च्यावाचीनपाणिरेतत्ते ततासौ ये च त्वामन्विति प्रत्येकं दक्षिणान्तान्पिण्डान्दद्यादाङ्क्ष्व[1] पितरसावाङ्क्ष्व पितामहासावाङ्क्ष्व प्रपितामहासावित्यभ्यञ्जनमेतानि[1] वः पितर इति कशिपूपबर्हणवासोऽञ्जनं चार्पयेत्पूर्ववदूर्जं वहन्तीरिति पिण्डं परिषिच्य त्रिरुदकाञ्जलिं दत्त्वा तथैव पितृनभिवन्द्य प्रवासयति। प्रजापते न त्वदिति गार्हपत्यं गत्वा यदन्तरिक्षमित्युपतिष्ठेतानाहिताग्निश्चैवमौपासनाग्नौ[2] चरुं श्रपयित्वा जुहुयादौपासनस्य संस्काराभावाद्यदन्तरिक्षमिति मन्त्रेण गार्हपत्यशब्दं विनैवोपस्थानं कुर्यादपां त्वौषधीनामिति मध्यमं पिण्डं दत्त्वाधत्त पितर इति पत्नीं प्राशयेदेषा पुमांसं जनयति। द्विपिता चेद्यजमानस्तथैव पिण्डं दत्त्वा यन्मे मातेत्येकस्मिन्पिण्डे तौ द्वावपि ध्यात्वात्र पितरो यथाभागमिति प्रणमेद्ये समाना इति सकृदाच्छिन्नमग्नौ हुत्वा पात्राणि द्वन्द्वमाहरतीति विज्ञायते। ॥ ६ ॥

अथ श्राद्धं। मासि मास्यपरपक्षे ऽन्यतमे ऽहन्यजन्मर्क्षे ब्राह्मणनिमन्त्रणादि सर्वमष्टकावत्तथाज्यचरू हुत्वान्नं पिण्डार्थं

---

१ This passage is difficult to restore. I have accepted the reading of Ma. The text of the mantra in the Saṃhitā seems also utterly corrupt.

२ चनाहिताग्नेः instead of ॰ग्निः Vi My.

पात्रे समवदाय ब्राह्मणान्भोजयित्वा नमो वः पितरो रसायेति पिण्डं प्रथमं पितृभ्यो नमो वः पितरः सोम्यास इति द्वितीयतृतीयौ पितामहप्रपितामहाभ्यां। पितृभ्यस्तत्पत्नीभ्यः पिण्डानर्पयतीति विशेषः। पितरि जीवति पिण्डा[1] न निर्वाप्यास्तमेवान्नादिना[1] यथेष्टं तर्पयेद्यस्मिन्दिने ज्ञातिर्मृतस्तस्मिन्मासि मासि प्रेतायैकं पिण्डं निरुप्यैकं भोजयेदा संवत्सरान्मासिश्राद्धमष्टकां च न कुर्यादा सपिण्डीकरणादित्येके। पितृपूजा प्रेतपूजा भवेत्पितॄन्प्रेतं[2] चोद्दिश्य[2] पूजनं सर्वं श्राद्धं भवतीति। पिण्डपितृयज्ञः कर्त्तव्य एवेति विज्ञायते। ॥ ७ ॥

अथ चैत्री। चैत्र्यां पौर्णमास्यां गृहं शोधयित्वालंकृत्य दम्पती नववस्त्रोत्तरीयपुष्पाद्यैरलंकुर्यातामाघारे कृते देवताभ्यः स्थाल्यां चरुं श्रपयित्वाज्येन ग्रीष्मो हेमन्त ऊर्णं मे पूर्यतां[3] श्रिये जातो वैष्णवं च कृत्वा साज्येन चरुणा मधुस्य स्वाहा माधवस्य स्वाहा शुक्रस्य स्वाहा शुचिस्य स्वाहा नभस्य स्वाहा नभस्यस्य स्वाहेषस्य स्वाहोर्जस्य स्वाहा सहस्य स्वाहा सहस्यस्य स्वाहा तपस्य स्वाहा तपस्यस्य स्वाहर्तुभ्यः स्वाहर्तुदेवताभ्यः स्वाहौषधीभ्यः स्वाहौषधीशाय स्वाहा श्रियै स्वाहा श्रीपतये स्वाहा विष्णवे स्वाहेति जुहोत्यपरेणाग्निं देवीं श्रियं देवं श्रीपतिं च प्राङ्मुखमभ्यर्च्य हविर्निवेदयति।

---

१ पिण्डो न निर्वाप्यस्त० Vi My alone.

२ Thus Ma; प्रेतान्वोद्दिश्य La Ed; प्रेताननुद्दिश्य Vi; प्रेतानुद्दिश्य My.

३ पूर्येतां Ma·Ed, but both copies of the Saṃhitā पूर्यतां।

चैत्याणि[1] पक्वान्यन्नानि ब्राह्मणानन्नसूक्तेन भोजयित्वा सपिण्डैर्युक्तो भुञ्जीत। ॥ ८ ॥

अथाश्वयुजौ। आश्वयुज्यां पौर्णमास्यां गोष्ठेऽग्निं समाधायाघारं जुहुयादग्नेः प्राच्यां भवं देवमावाह्याभ्यर्च्य तृणानि संभृत्य गाः स्थापयति। भवायेति स्थाल्यां निर्वापश्रपणं[2] कृत्वाग्नौ परिषेकं कुर्यात्। भवाय शर्वायेशानाय पशुपतय उग्राय रुद्राय भीमाय महादेवाय स्वाहेति रुद्रमन्त्रं त्र्यम्बकमित्याज्यहोमान्ते स्रुवेण चरुमवदायाभिघार्यावदानं संगृह्य पूर्ववज्जुहुयादर्कपत्रैर्देवं[3] चरुं निवेद्याज्यशेषेण तृणान्यभ्युक्ष्य गोभ्यः प्रदाय प्रदक्षिणनमस्कारौ करोतीति विज्ञायते। ॥ ९ ॥

अथाग्नौ नित्यहोमान्ते विष्णोर्नित्यार्चा[4] सर्वदेवार्चना भवति। अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता इति ब्राह्मणं। तस्माद्गृहे परमं विष्णुं प्रतिष्ठाप्य सायंप्रातर्होमान्तेऽर्चयति। षडङ्गुलादहीनं तद्रूपं कल्पयित्वा पूर्वपक्षे पुण्ये नक्षत्रे प्रतिष्ठां कुर्यात्तस्मात्पूर्वं तृतीयेऽहन्यौपासनाग्निकुण्डं कृत्वा पूर्ववत्प्रोक्षणोल्लेखनादि कर्म कुर्याद्द्वितीयस्यां वेद्यां षट्त्रिंशदङ्गुलप्रमाणैर्दर्भैः कूर्चैर्वा परिस्तीर्य परिधीनूर्ध्वसमिधौ निधायोर्ध्ववेद्यां यथादिशमिन्द्रादिदिग्देवान्दक्षिणे ब्रह्माणमुत्तरे सोमं च पुष्पाद्यैरभ्यर्च्य तथैवाघारं

१ चैत्रियाणि B.

२ ०श्रपणौ B.

३ Thus B, and the Prayoga also points to a plural; ०पत्रे देवं A La.

४ नित्यार्चना B.

जुहोति। दद्भ्यः स्वाहा हनूभ्यां स्वाहेत्यङ्गहोममतो देवाद्यैश्च हुत्वा पुरुषसूक्तं जपन्सुवर्णेनाक्ष्युन्मेषणं करोति। नद्यां तटाके जलपूर्णपात्रे वा[१] ये ते शताद्यैर्वस्त्राणि[१] कुशांश्चास्तीर्य विष्णुसूक्तेन देवं प्राक्शिरः शाययित्वाधिवासयति। द्वितीयदिवसे स्नात्वा रात्रौ पूर्ववदाघारं हुत्वाष्टौ कलशानाहृत्य पञ्चगव्यघृतदधिक्षीराक्षतोदकफलोदककुशोदकरत्नोदकैः पूरयित्वा देवमभ्यर्च्य वसोः पवित्रमग्न आयाहीषे त्वोर्जे त्वा शं नो देवीश्चत्वारि शृङ्गा[२] सोमो धेनुं चत्वारि वागिदं विष्णुरिति कलशैः स्नापयित्वापोहिरण्यपवमानैर्गन्धतोयैश्च स्नापयत्यग्नेरुत्तरस्यां व्रीहिभिर्वेदिं कृत्वा विष्टरं[३] न्यस्य[३] वस्त्राण्यास्तीर्य[३] देवमारोप्य वस्त्राद्यैरलंकृत्यार्चयति। पुण्याहं कृत्वा स्वस्तिसूक्तेन तामभिमृश्य स्वस्तिदा विशस्पतिरिति प्रतिसरां बद्ध्वा पूर्ववद्देवं शाययीत। ॥ १० ॥

कालविहीनं कुम्भमुत्पूतैराधावैरापूर्य देवस्य पार्श्वे निधाय प्रणवेनाभिमृश्य कूर्चाक्षतसुवर्णरत्नानि प्रक्षिपेन्निष्कलं देवं हृदये[४] तथाधावे[४] रुक्माभं रक्तास्यनेत्रपाणिपादं श्रीवत्साङ्कं चतुर्भुजं पीताम्बरधरं शङ्खचक्रधरं सौम्यं सकलं ध्यात्वा

---

१ वैते शता° Ma La Ed; वा एते शता° Vi My; एते शता also Bh.; acc. Ac. to the Saṃhitā the mantra begins ये ते श°, cp. IV. 14.

२ Thus Vi La Ed and printed text of the Saṃhitā; शृङ्गाः Ma My and Grantha copy of the Saṃhitā.

३ Thus A La; विष्टरे वस्त्राण्यास्तीर्य Ma; संन्यस्य Bh.

४ हृदयात्तदाधावे A La.

प्रणमेदग्निं परिषिच्य होत्रं प्रशंस्य दक्षिणप्रणिध्यामों भूः पुरुषमों भुवः पुरुषमोꣳ सुवः पुरुषमों भूर्भुवः सुवः पुरुषं नारायणं विष्णुं पुरुषं सत्यमच्युतमनिरुद्धं श्रियं महीमिति नाम्नावाह्य निर्वापं कृत्वाज्येन विष्णुसूक्तपुरुषसूक्ताभ्यामतो-देवादीञ्छ्रिये जातो मेदिनी देवीति चतुरावर्त्यं हुत्वा नाम्ना साज्य[1] चरुं जुहुयात्प्रभाते स्नात्वा प्रणवेन देवमुत्थाप्य शकुनसूक्तं जपन्सह कुम्भेन देवमानीय गृहे वायव्यां देवायतने ऽग्निशालायां वार्चापीठे रत्नं सुवर्णं वा संन्यस्य विष्णुसूक्त-पुरुषसूक्ताभ्यां विष्णुं प्रतिष्ठापयामीति प्रतिष्ठाप्य बिम्बस्य मूर्ध्नि नाभौ पादे च[2] सुवर्भुवर्भूरिति हृदये प्रणवं विन्यस्येदं विष्णुरिति देवं ध्यायन्कुम्भस्थमाधावं शक्तियुतं[3] कूर्चेनादाय बिम्बस्य मूर्ध्नि विष्णुमावाहयामीति संस्नाप्यावाहनं करोति। विधिनैवाराध्य हविर्निवेदयति॥ ११॥

अथ नित्यार्चनमतो देवा इति देवं प्रणम्य निर्माल्य-मपोह्योत्पूतैराधावैर्व्याहृत्या[4] वेदिं परिमृज्य पूर्ववद्देवं ध्यात्वा प्र तद्विष्णुरिति कुशपुष्पदर्भान्यतमेनासनं[5] कल्पयित्वा त्रीणि पदेति पाद्यं शं नो देवीरित्याचमनं दद्यादिषे त्वोर्जे त्वेति स्नापयित्वा विष्णोर्नु कमिति वस्त्राभरणैरलंकरोति। पूर्ववत्

१ A La om.
२ After च Ma La ins. क्रमेण।
३ Thus Vi My; शक्तियुक्तं La Ed; शक्तिं Ma; शक्त्या युतं Bh.
४ B व्यपोह्य instead of अपोह्य।
५ Thus A; कुशपुष्पाद्यन्यत॰ Ma.

वत्याद्याचमनं दत्त्वा तद्विष्णोः परमं पदमिति पुष्पं तद्विप्रास इति गन्धं परो मात्रयेति धूपं विष्णोः कर्माणीति दीपं त्रिर्देव इत्यर्घ्यं दत्त्वा पुनराचमनं ददाति । तदस्य प्रियमिति हविर्निवेदयेदिदं विष्णुरिति पानीयं तथाचमनं विचक्रमे पृथिवीमिति मुखवासं च दत्त्वा द्वादशाष्टाक्षराभ्यां पुष्पाणि ददाति । तं यज्ञपुरुषं ध्यायन्पुरुषसूक्तेन संस्तूय प्रणामं कुर्याद्यज्ञेषु विहीनं तत्संपूर्णं भवतीति श्रुतिर्द्विजातिरतन्द्रितो नित्यं गृहे देवायतने वा भक्त्या भगवन्तं नारायणमर्चयेत्तद्विष्णोः परमं पदं गच्छतीति विज्ञायते । ॥ १२ ॥

अथ ग्रहशान्तिं व्याख्यास्यामो । ग्रहायत्ता लोकयात्रा । तस्मादात्मविरुद्धे प्राप्ते ग्रहान्सम्यक् पूजयत्यादित्यश्चन्द्रो ऽङ्गारको बुधो बृहस्पतिः शुक्रः शनैश्चरो राहुः केतुश्चेत्येते नव ग्रहा । रक्तासितातिरक्तश्यामपीतसितासितकृष्णधूम्रवर्णाः । अनलाप्पतिगुहहरीन्द्रशचीप्रजापतिशेषयमाधिदैवत्याः[1] । मध्याग्नेयदक्षिणैशान्योत्तरपूर्वपश्चिमनैर्ऋतवायव्याश्रितास्तस्माच्छुद्धे देशे मनोरमे गोमयेनोपलिप्ते स्वे स्वे स्थाने शालिव्रीहिभिः सिकताभिर्वा चतुरश्रं वृत्तं तुल्याकारं त्रिकोणमष्टाश्रमर्धचन्द्राकारं[2] वज्राकारं दण्डाकृति[3] ध्वजाकृतीति[3] क्रमेण पीठान्युपकल्प्य[4] तेषु कूर्चं निधाय तद्दक्षिणपार्श्वे तदधि-

१ ०शेषयमा अधि० Ma.
२ अर्धचन्द्रं My La Ed.
३ ०कृतिर्ध्वजा० Ma, ०कृतिं ध्वजाकृतिमिति La.
४ उपलिप्य B.

दैवतामुद्दिश्य[1] पीठान्युपकल्प्याहवनीयान्वाहार्यगार्हपत्यावसथ्यसभ्यान्क्रमेणोपकल्प्याग्नीन्साधयित्वार्चयेत्करवीरशङ्खपुष्पोत्पलनन्द्यावर्तचम्पकमल्लिकासितगिरिकर्णिकाकल्हारतापिञ्छपुष्पैस्तद्वर्णवर्णैः पुष्पैर्गन्धैः पूर्ववदभ्यर्च्य शुद्धोदनपायसगुडोदनदध्योदनगौडिकचित्रोदनकृसरमाषोदनकणोदनानि क्रमेण निवेदयेत् ॥ १३ ॥

तदधिपांस्तदर्हेणाभ्यर्च्याघारं हुत्वार्कपलाशखदिरापामार्गाश्वत्थोदुम्बरशमीदूर्वाकुशान्यथा क्रमेण सत्येन सोमो धेनुमग्निर्मूर्धोद्बुध्यस्व बृहस्पते अति यच्छुक्रं ते अन्यच्छं नो देवीः कया नश्चित्रा केतुं कृण्वन्निति क्रमेणाष्टशतं सप्तविंशतिकं वा त्रिमधुराक्ताभिः समिद्भिस्त्वरुणाज्येन च जुहुयादाहवनीये शशिशुक्रयोरन्वाहार्येऽङ्गारकराह्वोर्गार्हपत्येऽसितकेत्वोरावसथ्ये गुरुबुधयोः सभ्ये सवितुरित्यग्निं दूतं ये ते[2] शतं सुब्रह्मण्य इदं विष्णुरिन्द्रं प्रणवन्तं गन्धद्वारां ब्रह्म जज्ञानं शं नो निधत्तां यमो दाधारेत्यधिदेवेभ्य आज्येन तत्तत्स्थाने जुहुयाद्विष्णोर्नुकादीन्[3] मिन्दाहुत्याश्चावितादीन्हुत्वा पायसकृसरगौड्याद्यैः पूर्वोक्तचरुभिर्ब्राह्मणान्भोजयित्वा रक्तधेनुमादित्याय शङ्खं सोमाय ताम्रमङ्गारकाय हिरण्यं बुधाय शुक्लं वासो बृहस्पतये हयं शुक्राय कृष्णां गां शनैश्चराय राहोश्छागं केतोरायस-

---

१ तदधिदेवमु॰ Vi My, तदधिदैवतमु॰ La Ed.

२ So here all the Mss., as against p. 63, l. 3.

३ Instead of ॰कादीन् Ma ॰कादि।

दण्डमित्यात्मविरुद्धानां तदर्हं[1] दद्यात्सर्वेषामलाभे सुवर्णं[2] । जन्मकर्मसांघातिकसामुदायिकवैनाशिकर्क्षसंस्थेषु क्रियाकाल-विरुद्धेषु ग्रहेष्वेतत्कुर्भर्चेष्वारभेतै तेन नवग्रहजा दुःखा व्याधयः शान्तिं यान्ति । अन्यथा महत्तरो दोषो भवति । ग्रहपूजां पुरस्कृत्य सर्वकर्म समारभेदिति विज्ञायते । ॥ १४ ॥

## चतुर्थः प्रश्नः समाप्तः ॥

---

१ Thus B; तदर्हमर्हं A, La.

२ Ma ins. वा ।

अथाहिताग्नेः पत्न्या गृहस्थस्य स्त्रिया ब्रह्मचारिणोऽनारोपितकार्यस्य च[1] दहनविधिं व्याख्यास्यामो । यथोक्तैस्त्रैवार्षिकैररिष्टैरायुरात्मीयं परीक्ष्य तृतीये पञ्चमे नवमे वाह्नि[2] मुमूर्षुर्बान्धवान्पञ्चविधानाहूय पूर्वं प्रियं भाषित्वैहिकं[3]संभोगं[3] पारलौकिकं चात्मनो[4] विभजेदुपस्थितेऽहनि शुचौ प्रदेशे सिकतातले[5] दर्भान्प्रागग्रानास्तृणाति । दक्षिणाग्रानित्येके । तत्रासीत शयीत वा दक्षिणशीर्षमस्याध्वर्युः शं नो मित्र इति शान्तिमात्मनः कृत्वायुषः प्राणमिति मुमूर्षोर्दक्षिणे[6] कर्णे[7] जपेत्संज्ञानमिति वामे च । प्राप्ते प्रयाणकाले शुक्लमहो मासाः षडुत्तरायणमग्निर्ज्योतिरनेन पथा ब्रह्मपदमपुनरावृत्त्याभ्येति[8] धूम्रः[9] कृष्णो रात्रिर्मासाः षड् दक्षिणायनं चान्द्रमसमेतज्ज्योतिः प्राप्य[10] निवर्तत इति गतौ चोभे विज्ञाय शान्तिं ज्योतिष्मतीं जपतीन्द्रियाणीन्द्रियार्थेषु निरुध्य क्रमेण घण्टावसानिके[11]

---

१ च in B and La only.

२ वा० B ; चा० A La.

३ ०हिकसंभोगं Mss. exc. Vi.

४ चात्मने Vi My La.

५ Thus Ma La Vi My ; सिकतास्तिलान् Ed and to this reading points Bh also.

६ मुमूर्षोः in Vi My La, not in Ed Ma ; supported by the Bh.

७ दक्षिणकर्णे Ed Vi.

८ Thus La ; अपुनरावृत्त्यभ्येति Ed ; अपुनरावर्त्याभ्येति Ma ; पुनरावृत्त्या० Vi ; पुनरापत्त्या० My.

९ धूमः La Vi My ; the Bh., धूमो धूम्रवर्णः points to धूम्रः ।

१० प्राप्यते Vi My.

११ ०वसानके Vi.

पदत्रये निविष्टे[1] नानाविधे स्वयंज्योतिषि ब्रह्मण्यद्वितीये तद्यो ऽसौ सो ऽहमित्यात्मोपासनक्रमेण[2] वा समादधीत । यस्मात्प्रयाणकाले[3] यं ध्यायति तन्मय एव भवत्यात्मेति ब्रह्मवादिनो वदन्ति । तदेवं देवहते[4] प्रतिसंहारे गन्धात्मकं भूमेर्गुणमापः प्रथमं ग्रसन्ति । तदास्य भ्रमतीव शरीरं व्यावतिष्ठतापां[5] गुणोद्रेकादिन्धितो ऽग्निः प्रविश्य प्राणायतनमर्माणि दारयन्नाडीमुखेभ्यो रसं दहति । तदा दह्यमानमिव शरीरं मन्यते । ततः कीलालं शुष्यति । मुक्तबन्धे श्लेष्मणि पित्तेन सहाग्नौ पतिते स चाग्निरर्थाभावाच्छाम्यति । वायुस्तिर्यगूर्ध्वमधश्चैव[6] शरीरं व्यालोलयति । तस्मान्मुह्यति । तदा स्वैः स्वैः कर्मभिरुन्मुक्ताः[7] पञ्च वायवो विसृजन्त्यात्मनः स्थितिमभिनिष्क्रामतश्चोच्छ्वास ब्रह्ममुक्ताहृतेरिव[8] मन्दं मन्दमूष्माणमुदावहति । तदा वेगेनोत्थाय वायुमूर्तिर्भ्रमन्निवास्य[9] कण्ठे खुरखुराय-

---

१ °ष्टो Ed only.

२ आत्मोपा° Ma Bh My.

३ प्रायण° Ed.

४ देव° A La.

५ Reading uncertain. I have accepted the reading presented by Ed; व्याप्यतिष्ठेता° Ma; व्याप्यतिष्ठतोपां Vi; द्यावतिष्ठत the Bh, explaining विशेषणावतस्थे (pointing to स्ववति°); व्यापतिष्ठतासां La; My is incomplete.

६ एवं instead of एव B.

७ मुक्ताः instead of उन्मु° B.

८ Thus tentatively emended; °मुक्ताहृतेरिव Ma Ed; ब्राह्म मुक्त्याहृते° My, Vi corrupt; ब्राह्ममूर्त्याहृतेरिव La; Bh presents मुक्ता।

९ अस्य om. La A.

माणो[1] विश्वमेव विहरञ्जलूकावत्पदात्पदान्तरं[2] विन्दन्नुत्क्रामति । धर्माधर्मावूर्ध्वभावो[3] ऽधोभावश्च[3] ज्ञानाज्ञाने सुखदुःखे चेश्वरवशात्तेन सह[4] प्रतिष्ठेयाताम् ॥ १ ॥

अथ[5] वै विगतानिलचेष्टं देहं मृतकमाज्ञाय[6] गेहाद्बहिः[7] शुचौ देशे चित्तिःस्रुगादिना स्नापयित्वाज्याभिषेचनं[8] ग्राम्यालंकरणं बर्हिषा पादकरयोरङ्गुष्ठौ[9] बध्नीयाद्यस्याभोक्ता शकल[10] इत्यहतेन वाससा पादतोदशान्तमाच्छादयति । तथैव शयनमभ्युच्य गाङ्गेयेति[11] शाययीत । नैतदन्ये स्पृशन्त्यनाहिताग्न्यादीनां सर्वौषधिपृक्तेनोदकुम्भेन[12] श्मशाने स्नानालंकारौ स्यातामिति विशेषः । उखास्वग्नीनादाय यज्ञभाण्डानि नवानि मृन्मयानि[13] घटशरावादीन्यौदुम्बराणि समित्परिधिशाखापत्राण्युत्तरबर्हिर्हिरण्यशकलतिलाक्षतदधिमधुक्षीराज्यादीनि[14]

१ Thus Ed My La Bh ; खुरंखुरा० Ma Vi.

२ जलुकवत् A La.

३ ऊर्ध्वभागाधोभागौ च Ed only.

४ सहात्मना B.

५ अथो A La.

६ मृतकं instead of मृतं Vi My La.

७ These two words om. Vi My ; only Vi has a trace of them : मृतमाग्रेयगे शुचौ ।

८ आज्य om A La ; ०भिषेकं Ed only.

९ ०ङ्गुष्ठे B.

१० Mantra uncertain ; यस्योभेत्ता शकल La Vi My.

११ गाङ्गेय इति Vi My Bh.

१२ ०प्रयुक्तेनो instead of ०पृक्तेनो B.

१३ मृण्म० all exc. Ed.

१४ A and La पात्राणि instead of पत्राणि

संभृत्योत्तरस्यां पूर्वतस्तस्मान्न्यस्यति[1] स्नात्वाध्वर्युः[2] पितृमेधविधिनाग्निहोत्रेण यथास्वमग्नौ दक्षिणाभिमुखः प्राचीनावीती परिस्तीर्य सतिलेनाक्षतेन वैश्वदेवं कृत्वा गृहदेवताभ्यो बलिं हरेत् । शवस्य भारकाः सपिण्डाः पञ्चसंबन्धिवर्गा[3] वा तदन्ये समानौ द्वौ चत्वारो वा स्नाता दर्भरज्जुसंवीता दर्भाम्बरधराः स्युः । पुत्रास्त्यष्टिकायोगेनाग्नीनसंकरं[4] गृह्णीयुः कुम्भं च[5] पत्नीतराण्यन्ये ऽनुनयन्ति[6] पश्चादुत्तारेण[7] मेरोरंह इति मृतकमुद्धृत्य यथाप्रवेशं गृहान्निर्गमय्य हरेयुर्ग्रामान्ते पालाश्या शम्या वा शाखयाप्रदक्षिणमपेत वीतेति त्रिवीथीस्त्रिरपक्रमं[8] दक्षिणान्तं मार्जयित्वाद्भोभिरद्भिरिति दक्षिणस्यां तामुत्सृजति । तत्र तिलाक्षतोदकैः प्रोक्ष्य मेरोरंह इति दक्षिणशीर्षमवतारयेयुरुत्तरत्राप्युद्धारावतारयोरेवमेतेन[9] कुर्वीरंस्तथैवाग्न्यादिसंभारान्निधाय तस्माद्वायव्यां दक्षिणाग्रेषु दर्भेषु त्रिगुणेश्वराणि त्रीणि मृत्पिण्डान्यवाच्यन्तं न्यस्य हव्येन विष्णुं

---

१ पूर्ववत् B instead of पूर्वतः ।
२ स्नातो A, स्नानोध्व० La.
३ Thus La Vi My Bh ; पञ्चबन्धुवर्गा Ma Ed.
४ ०त्रियष्टि० B.
५ च om. B.
६ नयन्ति Ma Vi My, नयान्ति La.
७ Thus Ed Vi ; ०दुत्तरेण Ma Bh My La.
८ त्रिः om. B.
९ उद्दर instead of उद्धार B.—अनेन instead of एतेन Ed.

ब्रह्माणं तिलाक्षतोदकैर्दक्षिणाभिमुखो ऽभ्यर्चयति[1] । तथापसव्यं[2] कव्येन रुद्रं पूजयेत् । आधानक्रमेण प्रवाभिमुखः स्वे स्वे[3] ऽग्नौ जुहुयात् धात्रे ऽर्यम्णे ऽंशाय मित्राय वरुणाय त्वष्ट्र इन्द्राय पूष्णे भगाय विवस्वते[4] पर्जन्याय विष्णवे स्वाहा व्याहृतीर्ब्रह्मणे[5] स्वाहा व्याहृती रुद्रेभ्यो ऽपसव्यं होमो मृगव्याधाय शर्वाय भवाय पिनाकिने भवनायेश्वराय स्थाणवे कपालिने निर्ऋतये ऽजायैकपदे[6] ऽहये बुध्नियाय स्वाहेति व्याहृतीः । ॥ २ ॥

पूर्ववत्पूजनं मृत्पिण्डानां । मृतकस्य चेलोपमार्जनैः सिग्वातं वातास्ते वान्त्विति त्रिः कृत्वा तथा श्मशानेक्षणमुद्धृत्यानु यज्ञभाण्डं नयति[7] । मृत्पिण्डं वैष्णवं तेषामप्सु क्षिपति[8] । ब्राह्मं तत्रैव पिदधाति । रौद्रमादाय गच्छेच्चितोद्देशं[9] वनं नदीतीरं शिलोच्चयं वा प्रत्यग्दक्षिणतश्च प्रवणं गृह्णाति । भिन्नच्छिन्नमलवल्मीककेशकपालास्थितुषाङ्गारोषरेरिणपाषाणवृक्षमूलोद्देशान्वर्जयेत्तत्र[10] चिताप्रमाणं कायमात्रायामं तदर्धविस्तारं

---

१ अभ्यर्च्य La Vi My.

२ ०सव्यः Vi My.

३ स्वे once B.

४ Instead of विवस्वते Ma and printed text of Saṃhitā दिवस्पतये।

५ Here and below we find व्याहृतीः or ०तिः or ०तिं or ०तौ।

६ Thus Ma; ऽजैकपदे and ऽहिर्बुध्नये the others.

७ संनयति Ma.

८ निक्षिपति Ma.

९ चितोपदेशं B.

१० ०मूलदेशान् B.

गृहीत्वा पूर्ववच्छाखया सहिरण्यया वा प्रमार्ज्योत्सर्जनमभ्युक्षणं च। तासु वीथीष्वपसर्पात:[1] सर्पत प्रेता इति[1] तिस्रो नव वा कर्षूर्दक्षिणापवर्गाः स्फ्येन परशुना वा भागावगाढविस्तारं मध्यपूर्वापरतश्च खनति। तिलतण्डुलानामपसव्यं मुष्टिभिर्यमाय दहनपतये पितृभ्यः स्वधा नम इति तांस्तया पूरयित्वा शेषान्सर्वतो विकीर्य[2] मध्ये मृत्पिण्डेन सह हिरण्यशकलमवदधाति। दक्षिणाग्रैर्दर्भैस्तत्प्रमाणैरास्तीर्य शङ्कुं तद्विस्तारोच्छ्रयं दक्षिणाग्राण्येधांसि चिनोति। कुरु मध्विति साङ्गं कृष्णाजिनमधोलोम[3] दक्षिणग्रीवं यद्याहिताग्निरास्तृणाति। चितापूर्वं मृतकं तथा निधायाग्नींश्च सर्वानथ दक्षिणामुखः प्राचीनावीती परिस्तीर्य यथास्वमग्नौ जुहोत्यग्नये सोमायेन्द्राय यमाय वरुणाय कुबेराय पृथिव्या अद्भ्यस्तेजसे वायव आकाशायाहङ्काराय बुद्ध्य इन्द्रियेभ्यः पुरुषाय सूर्याय जीवाय मनसे पञ्चभूताधिपतये परमपुरुषाय सुकृताय धर्माय ध्रुवाय वृषाय स्वाहेति व्याहृतीः। शिवं यात्विति मृतकं प्रोक्ष्य चितायां तिलानवकीर्य तत उद्धृत्यावतारयेयुः। सप्तसु प्राणमार्गेष्ववाचीनपाणिर्हिरण्यशकलानि

१ अपसर्पत य इति Ma in acc. with the printed text of Saṃhitā ; अपसर्प सर्पत प्रेता इति A and La, more in acc. with the grantha ms. of S., which reads अपसर्पात(:) सर्पत etc. —वीथीषु La only.

२ विकीर्य Ma Bh My La ; वकीर्य Ed Vi.

३ ०लोमं Bh Vi.

10

सप्त मधुनाक्तान्या वो वहेति[1] प्रत्यस्यत्याज्याक्तानीत्येके[2]। अलाभे[3] सप्ताज्यबिन्दूनिति[4] विज्ञायते। ॥ ३ ॥

तिलतण्डुलदधिमधुक्षीराणां यथालाभमिश्रमास्ये क्षिपेत्तदास्यं दर्भेण स्पृशन्निश्चतुर्होत्रं जपति। पृथिवी होता द्यौरध्वर्यू रुद्रो ऽग्नीद्बृहस्पतिरुपवक्तेति चत्वार्यासीदन्तानि चतुर्होत्रं। तथा नासिकापुटयोर्दशहोत्रं। चित्तिः स्रुक् चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो ऽग्निर्विज्ञातमग्निर्वाक्पतिर्होता मन उपवक्ता प्राणो हविः सामाध्वर्युरित्येतानि दशासीदन्तानि दशहोत्रं। तथाक्ष्णोः षड्ढोतारं। सूर्यं ते चक्षुर्वातं प्राणो द्यां पृष्ठमन्तरिक्षमात्माङ्गैर्यज्ञं पृथिवीं शरीरैरित्येतानि षडासीदन्तानि षड्ढोतारं। तथा कर्णयोः पञ्चहोतारमग्निर्होताश्विनाध्वर्यू त्वष्टाग्नीन्मित्र उपवक्तेति पञ्चास्तामासीदन्तानि पञ्चहोतारं[5]। तथा कीकसासु सप्तहोतारं। महाहविर्होता सत्यहविरध्वर्युरच्युतपाजा अग्नीदच्युतमना उपवक्तानाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरावयास्य उद्गातेति सप्तास्तामासीदन्तानि सप्तहोत्रं। जघनेन दक्षिणाग्रेषु दर्भेषु

---

१ Reading of pratīka uncertain ०क्तान्या श्चो वहेति Ma Ed Vi La and printed Saṃhitā-text ; ०क्तान्यावहेति My ; श्चा न वह grantha ms. of Saṃhit श्चापो वह Bh. ; cp. VII. 2.

२ प्रत्यस्य instead of प्रत्यस्यति B La.

३ तस्य ins. A La.

४ ०बिन्दव इति Ma.

५ पञ्चहोत्रं B La.

यज्ञपात्राणि प्रयुनक्त्युत्तरेण प्रोक्षणीं संस्कृत्य मृत्पात्रं[1] दारुचितां च[2] प्रोक्ष्याथ[2] दर्शपूर्णमासवत्तूष्णीमाज्यानि गृह्णाति जुह्वां घृतमुपभृति दधि ध्रुवायां मधु क्षीरमग्निहोत्रहवण्यामपि वाज्यमेव सर्वासु। यान्यासेचनवन्ति पात्राणि तानि संपूरयत्यभ्युक्ष्येतराणि[3] पात्राण्यत्रावचिनोति[4]। तथाग्न[5] आयाहीति जुह्वा घृतदानमिषे त्वोर्जे त्वेत्युपभृता[6] दधि देयमग्निमीळ इति ध्रुवया[7] मधु ग्नं न इत्यग्निहोत्रहवण्या[7] क्षीरं[8]। तानि तिलाक्षतादीनि तथापोह्य दर्शपूर्णमासानुयोज्यान्यस्मा उपाहरति। अग्ने[9] मृतादिति[9] स्फ्यं जुहू दक्षिणे हस्ते निदध्याद्राजसनीत्युपभृतं[10] सव्ये। विश्वं दिधुक्षुरिति[11] ध्रुवामुरसि। तत्रैवाग्निमश्वत्यादित्यरणिमग्राग्रं। या लोका इत्यग्निहोत्रहवणीमास्ये[12]। स्यातामित्याज्यस्रुवौ[12] नासिका-

१ Thus all the Mss; Ed only मृतं; मृतश्रवपात्रं Bh. read मृतं पात्रं, cp. Hir. pi. sū. p. 36, l. 15.

२ चाथ प्रोक्ष्य A La; Ma om. अथ, Bh. ins. it after प्रोक्ष्य and cp. Hir. l. c.

३ ॰भ्युक्ष्येतेतराणि Ma.

४ Thus Ma My; ॰त्र वा चिनोति Vi; ॰त्राण्यवाचि॰ Ed La; अवचिनोति Bh.

५ अथाग्न Ma only.

६ ॰पभृति Vi My.

७ ॰वायां and ॰हवण्यां Vi My.

८ Ed La My ins. ददाति, Vi दधाति।

९ Thus A and La; अग्ने घृता॰ Ma; अग्नेर्घृता॰ Bh.

१० ॰राजसन्नित्यु॰ Ma.

११ दिधुक्ष॰ Vi My; दिधक्षु॰ Ed; दधिक्षु॰ Ma; दिदिक्षुमिति Bh, दिधिक्षुरिति La.

१२ Original text uncertain. Thus Ma and probably Bh; ॰हवणीमास्यता॰ A; ॰णीमास्याता॰ La.

पुटयोर्वारुणावित्याज्यस्थाल्यौ[१] कण्ठे। कराविति प्राशित्रं भित्त्वा वा[२] कर्णयोर्मुङ्कराराण[३] इत्युलूखलमुसलौ हन्वोर्हार्यमिति ग्रावाणकौ दत्सु यदि ते स्यातां। षडष्टकमिति कपालानि शिरःस्थाने ललाट एककपालं। विष्णो रराटमिति प्रोच्य पिष्टसंयमनीमुदरे[४]। परशुसुदिते मेति छित्त्वा चैकं[५] शूर्पं पार्श्वयोरस्येति सांनाय्यकुम्भं वक्षणे यदि संनयेत्सत्यव्रतेति दृषदुपले अण्डयोः। सत्यं वर्हिर्ज्योतिषेत्यग्निहोत्रस्थालीमन्वाहार्यपचनं च पृष्ठयोरिन्द्रसेनेत्युपावहरणौ पादयोर्यन्मनीषिणां[६] मलदेति वेदं कूर्चं चूडिकायां। चन्द्रमा प्रभवेतीडापात्रं शिरःस्थाने। तत्रैव तथोपसादनिकमेवं[७] यथास्थानमर्पयित्वावशिष्टानि प्रक्षेपण्यादीनि लौकिकसंभारभाण्डानि धेनुर्वहाणामित्यन्तरा[८] सक्थिनौ[८] क्षिपेत्[८]। स्फ्यादीनि यज्ञपात्राणीममग्ने चमसमिति निर्वपेदित्येके[९]। ॥ ४ ॥

---

१ Thus Vi My La ; ०वारुणादित्या० B ; ०वारुणासीत्या० Ed.
२ वैकं Ma.
३ Thus A La ; ०मुङ्करेरा इत्य० Ma ; मुङ्करेराणाम् Bh.
४ ०संयमनमु० B ; read पिष्टसंयवनीम्।
५ वैकं Ma.
६ The mantra without यन् acc. to Ed ; यन्मनीषा मंदेति Ma.
७ Thus Vi My ; ०सादनीक० B La ; ०सादनीमेवं Ed.
८ Thus Ed ; अन्तरासक्थिनिक्षि० La Vi My ; अन्तरासक्थ्ये Ma.
९ Here the two recensions diverge widely. The one group (A, i.e. Ed, La Vi, My) reads as I have printed, the other group (B, i.e. Ma, Bḥ) ends the Khaṇḍa with क्षिपेदिति विज्ञायते। ४। and gives the sentence स्फ्यादीनि..निर्वपेदित्येके after the sentence which ends with करोति (page 77, line 3).

अनाहिताग्नेः स्रुवादीनि धेनुर्वहाणामित्यादधीतेममग्ने चमसमिति कृताञ्जलिः पुरतः स्थित्वा प्रोच्य कृष्णाजिनमादायोर्ध्वलोम्ना तेनाच्छादनं करोति। बान्धवाः कनिष्ठप्रथमास्त्वयः[1] सर्वे वा स्विन्वातेन पूर्ववत्सव्यापसव्यमुपवीजयन्ति[2]। यस्मात्स्विन्वातादेष पथि सुखं यातीत्यामनन्ति। पत्नी पुत्रो सनाभिरन्यो वा समानो जलपूर्णकुम्भमादाय[3] शिरस्तः प्रसव्यं सिञ्चन्पर्येति। पृष्ठतोऽध्वर्युरास्थितः शिरःस्थं परशुना घटं किञ्चिद्भिनत्ति। तां धारामनुमन्त्रयत इमा आपो मधुमत्योऽस्मिंस्ते लोक उपदुह्यन्तामिति। द्वितीयं पर्येति। मध्यतो भिनत्ति। तां धारामनुमन्त्रयत इमा आपो मधुमत्योऽन्तरिक्षे ते लोक उपदुह्यन्तामिति तृतीयं पर्येति। तत उपरिष्टाद्भिनत्ति। तां धारामनुमन्त्रयत इमा आपो मधुमत्यः स्वर्गे ते लोक उपदुह्यन्तामिति। ततः स कुम्भं पृष्ठतः क्षिपति। यदि पूर्वतः क्षिपेत्स शर्मणे कुलस्येति। ताः कपालावशेषाः प्राणस्थानेषु सर्वेषु भूः पृथिवीमित्यपो नयति। प्राचीमुदीचीं वा निष्क्रम्य दिशं शिखां यज्ञोपवीत्यप[4] उपस्पृश्य प्राणायामं कृत्वार्द्रा

---

१ ०स्त्रियः instead of ०स्त्वयः Ma Ed La.

२ Ed reads त्रिः कृत्वोपवी० after सव्यं; only Bh. has the plural of the verb.

३ जलपूर्णं Vi My La.

४ अप om. A La.

ओषधीर्वनस्पतिं हिरण्यं वालाभे[1] गां ब्राह्मणान्वेचयित्वा[2] देवस्य त्वेति गत्वा दक्षिणामध्वर्युप्रभृतिभ्यो दद्याच्च वरं ददात्यथाध्वर्युरग्नीन्प्रज्वाल्य नियुञ्जीत । सव्येन मुक्तशिखः प्राचीनावीत्याग्नेय्यामग्निर्यजुर्भिः सवितेति संभारैः सेनेन्द्रस्य धेनेति पत्नीभिराहवनीयं ददाति । वाचस्पते विधे नामन्निति ग्रहैर्वाचस्पते वाचो वीर्येणेत्यृतुमुखीभिर्नैर्ऋत्यामन्वाहार्यं । सोमः सोमस्य वाचस्पते ऽच्छिद्रयेति ग्रहैर्वायव्यां गार्हपत्यं । वाग्घोतेत्युत्तरस्यां पुरस्ताच्च सभ्यावसथ्यौ दत्त्वा ब्राह्मण एकहोतेति स्थित्वा हृदयं सपत्याज्याक्ताभ्यां पाणिभ्यां परावृत्तमुखो ऽङ्गुष्ठबन्धौ विमुच्य पादावुपलिम्पत्यैशान्यां कृताञ्जलिरयं घर्म इत्युपतिष्ठेतानाहिताग्निः सुवर्णघर्म इत्युपस्थानमितरेषां कपालसंतपनाग्निनैकर्चया[3] दहनमित्येके । ॥ ५ ॥

स[4] उपवीती[4] सं त्वा सिञ्चामीति शान्तिं जप्त्वोपतिष्ठेतोद्वयं तमस इत्यादित्यमतो ऽप्रदक्षिणमनीक्षमाणा[5] ग्राममधर्मेणाधोमुखा निवर्तेरन् । श्मशानान्निर्गच्छतो त्रिजने दर्भरज्जुं प्रसार्यैको मावतरतेति वारयेन्न पुनरवतरिष्याम इत्यधस्तात्तस्याः प्रयान्ति । विसृज्यान्ये ऽनुयाता गच्छन्ति ।

---

[1] वालभेत Ed only.

[2] ०वेचित्वा Ed; ०णानीचित्वा La Vi; ब्रह्मनिचयित्वा My.

[3] ०संतपनाग्निरेक० A La, but the reading as given above, is mentioned by Ed in a foot note.

[4] सोपवीती A La.

[5] ०मनिरीक्षमाणा Ma Ed.

तथैव विजनेऽपः प्रपद्यमानान्पूर्वोक्तां शाखां प्रसार्य स्यालो वा सपिण्डो वा राजपुत्रो वा वारयेत्प्रतिमन्त्रेण तोयधिं दक्षिणामुखाः सर्वे प्रकीर्णकेशाः प्रपद्येरन्नप्सु सकृन्निमज्ज्योत्तीर्याचम्य दक्षिणामुखा प्राचीनावीतिनो मुक्तशिखाः सर्वे सनाभयो दक्षिणाग्रेषूदुम्बरपर्णेषु तिलाक्षतेषु त्रिरुदकाञ्जलिं तिलमिश्रं प्रेतस्य गोत्रनामपूर्वमासावयेदसावेतत्त उदकमिति सव्योत्तराभ्यां पाणिभ्यां ददते सर्वे चाप्ता [1]शमिताम्बरवाससा[1] जलमादाय कनिष्ठपूर्वं यावदायान्ति यत्तत्र स्त्रिय श्चाङ्गस्तत्कुर्वन्ति । गोमयेन गृहं शोधयित्वोपलिप्योल्कया त्रिर्दग्ध्वा पुष्पतिलाक्षतैः स्वस्त्यस्तु वो गृहाणामिति यस्मिन्देशे प्राणोत्क्रान्तिस्तत्र च विकीर्य द्वारस्य निर्गमनदक्षिणभागे समनुलिप्य पुष्पाद्यवकीर्याश्मवह्निहिरण्यगोमयोदुम्बरपत्रतिलाक्षतानि निधाय धूपदीपादिनोपगतान्तावत्प्रतिगृह्णीयुः[2] । तदश्म सपत्रं वस्त्रतोयेनाप्लुत्य धान्याक्षतं सतिलमालभ्य ततो वह्निं सुवर्णं गोमयं च स्पृष्ट्वा तत्र स्थिलानामन्नान्विसृज्य वृद्धाग्रं गृहं प्रविश्य लोकयात्रामासीरन् । तदेवमहोरात्रमुपोष्य प्रातः पूर्ववत्पयोपस्थाय चितास्थीन्युपसंहृत्य पयसाज्येन प्रक्षाल्याकृतिं कृत्वा पुष्पादिभिरभ्यर्च्यान्नापूपाद्यैस्तूष्णीं

१ Thus Ma Bh ( शमि॰ Ma ); चाप्ता मितांबरवाससा Vi My La, thus also Ed ( only मिताम्बरावा॰ ) ।

२ Exact reading uncertain. I have followed A (note the neglected sandhi instead of उपगतांस्तावत्). Ma: धूपादीपादीनिवेदिताः तान्प्रति॰, but the Bh. explains उपगतान् ।

निवेद्यैतेन[1] विधिनाहुतिं दहेद्यस्मात्कुलस्य मङ्गल्यमुत्तरा[2] च गतिर्भवति । तदह्नि तं चिन्तयित्वा सतण्डुलं वस्त्रं कांस्यं पानीयं च दद्यात् एष नग्नप्रतिच्छन्दो ऽस्य भवति । ॥ ६ ॥

स्नात्वा गुरवे पानीयार्थं शक्त्या दक्षिणां दत्त्वा सायंप्रातस्त्रिरुदकाञ्जलिं दत्त्वा नित्यमेकैकं[3] वर्धयित्वा तर्पयेत्पूर्ववदपो[3] वासमादायाश्माप्लुत्याभ्यर्च्य बलिं ददाति । जलान्तमा दशाहात्ततः प्रभृत्येकभक्ता[4] निरानन्दा अधःशायिनो भवेयुः । मातापित्रोर्हतवासाः[5] परिवत्सरं ब्रह्मचारिव्रतं चरेद्यस्माच्चीर्णपितृव्रतो वंशं वर्धयेच्चतुर्थे ऽहन्यस्थिसंचयनं कुर्यात्सप्तमे ऽहनि चितां पिधाय पैष्टिकमाकारं कृत्वा पुष्पतिलचूर्णलाजधूपदीपाद्यैः पूजयित्वा बलिं निवेद्य जलं दद्याद्दशमे ऽहनि तीर्थस्य विसर्जनमुदकाप्लुतं तदश्म भूमौ तत्रैव तीर्थस्थाने ऽपिधाय बलिस्थाने पायसं प्रस्थतण्डुलैः पक्वं त्रिभिर्भृत्याद्यैर्गृहीत्वा तेनैवाश्मना सह पितृभ्यो दद्यादिति विसर्जनं । साये[6] ऽग्न्युच्छिष्टपात्राण्युद्दीप्य[6] तीर्थं विसृज्य स्नात्वैकादश्यामेकोद्दिष्टमन्ये चाचक्षते । वानप्रस्थस्य पत्न्याश्च गृहस्थवद्दहनं कुर्यात् ॥ ७ ॥

---

१ तेन instead of एतेन B.

२ माङ्गल्य॰ Ma La Ed ; मङ्गलम् Bh.

३ नित्यं . . तर्पयेत् om Ma, but in Bh there are traces of these words.

४ ॰भुक्ता B.

५ ॰पित्रोरहतवासाः A.

६ Thus Ma and La ; सायाह्न॰ Ed ; सायेन्यु॰ Vi My.

यो ह वै धर्माधर्मौ परित्यज्य दक्षिणे देवानदक्षिणे पितॄन्समारोप्य सर्वमात्मनि पश्यन्यतिरात्मयाजिनस्तस्य[1] वेदाग्निरिति ब्रह्मवादिनो वदन्ति। तथा योगी देवसायुज्यकः परकायप्रवेशीत्येते ऽप्यनग्नयः। शरीरमेतेषां[2] न स्पृश्य काष्ठैरन्तरीकृत्य रज्जुभिर्बद्ध्वा समुद्रगां नदीं नीत्वा वालुकप्रदेशे श्वभ्रं खनति। तत्रासयित्वा वालुकैरेव[3] पिदध्याद्।त्र[3] गाथा भवन्ति।

यथा सन्न्यासिनां कायं ये वहन्ति द्विजातयः।
पदे पदे यज्ञफलं लभेरन्ननुपूर्वतः[4] ॥
अनाथानां शवं चैव ये वहन्ति द्विजातयः।
तत्संस्कारकृतो ये च ये च श्राद्धानि कुर्वते ॥
तेषामेव फलं प्रोक्तमश्वमेधस्य धर्मतः।
मृतानां तु शरीरं यदग्नेर्हविरिति स्मृतम् ॥
तस्मात्पुण्यशरीराणि दहन्सद्यः[5] शुचिर्भवेत्।
परदेशगतस्यापि सद्यः शौचं विधीयते ॥

इति विज्ञायते। ॥ ८ ॥

अथापद्दाह्यं[6]। स्नातको विधुरः कृतचौडो दन्तजातो वा

---

१ Thus A and La; पश्यति। आत्मया॰ Ma; the Bhāṣya is missing here.

२ Thus Ed; एषां instead of एतेषां Ma; शरीरमेतन्नस्पृश्य Vi; शरीरमेतेनस्पृश्य My, La.

३ वालुकैरपिद॰ Vi My La.

४ Thus B and La; ॰न्नानुपूर्वतः Vi My; ॰चानुपूर्वशः Ed.

५ दहन् Ma Ed; वहन् Vi My Bh La.

६ ॰द्दाह्य all the Mss., ॰द्दाह्याः Ed only.

कुमारः कुमारी च विधवा वीरविधवासूतविधवा सूतिका मूढगर्भिणी पतिघ्नी निन्दिता घोरा यशोघ्नी पुत्रघ्नी दीक्षितोज्झितानार्तवा[१] पाषण्डमूकबधिरा मन्त्रवर्जिता पापबुद्धिर्दुःशीला स्त्री[२] च[२] दहनमेतेषामापद्दाह्यं[३] चाचक्षते। यो वात्मयाजी स्नातकोऽप्राप्तगृहवृत्तो मृतदारो वा म्रियेत तस्य ह वै तद्ब्रह्म विफलं मा भूदिति विशेषार्थी यथाविभवानुरूपं दक्षिणां दत्त्वा तुल्यां कांचित्कन्यां तस्मै दापयित्वा तया संहोषितस्य प्राप्तगृहवृत्तस्य पूर्वोक्तेन विधिना दहनं कुर्यात्। तथैव कन्यां च मृतां प्राप्तयौवनां तुल्येन पुंसा प्राप्तगृहवृत्तां दहेत्। दन्तजातस्य कृतचौडस्य वा तदेषां[४] तत्राग्नौ[४] व्याहृतीर्हुत्वा सावित्र्या दहनं कुर्यात्। सूतिकां मूढगर्भिणीं पुंश्चलीमनार्तवां पाषण्डमूकबधिरां मन्त्रवर्जितां पापबुद्धिं दुःशीलां स्त्रियं पुरुषं वा तूष्णीं दावाग्निना दहेदित्यापद्दाह्यं विज्ञायते। ॥ ९ ॥

अथावटाहिकं[५] बालस्य मरणेऽलंकृत्य वाससा पत्रेण वाच्छाद्य केनापि साधारं नयति। तत्र[६] श्मशाने दक्षिणो-

---

१ Before अनार्तवा Ed ins. त्यक्तभर्तृका which obviously is a glossema.

२ स्त्रीति च A and La.

३ Instead of आपद्दाह्यं (Thus La Vi My, and to it points also Bh.) Ma Ed आपद्विधानं।

४ तदेषां तत्र चाग्नौ Ma and Ed (only एतेषां instead of एषां); तेषां प्रमृत (तं मृतं My La) तत्राग्नौ Vi My La.

५ अथावटाहितकं B.

६ Thus Ed and Bh; तथा Vi My Ma La.

त्तरमवटं तत्प्रमाणं खनति। घृतक्षीराभ्यामवटमभ्युक्ष्य दक्षिणाग्रं दर्भानवकीर्य तत्र साधारमाधाय शवमाज्यमिश्रैस्तिललाजैरक्षतैर्वास्यं पूरयित्वा पिधायोपरि घृतक्षीराभ्यामुक्षणं बलिदानं वा कृत्वागच्छेन्नास्योदकदानं[1] कुर्यात्। अहं[2] क्षिपेदिति[3]। ॥ १० ॥

अथादाह्यान्व्याख्यास्यामो। न दाह्यो ऽतुल्यो भवति। तुल्यो ऽपि पापरोगान्वितो रज्जुशस्त्रविषविभ्रमप्रतिषिद्धहतश्चात्मघाती ब्राह्मणादिहीनहतो ऽग्निदग्धो ऽप्सु मृतो व्याडहस्तिपशुमत्तहतः स्वकिल्बिषाशनिभूतसंपातभृगुपतनमहौघपरिसर्पणमहाध्वगमनप्रवासदुर्गव्याध्युपेक्षाव्यर्थप्रायोपवेशनेषु मृतो[4] न दाह्यो भवत्या[4] दन्तजननात्त्वाग्निरा चौडकादित्या पञ्चमाद्वर्षाद्दारकस्या सप्तमात्कन्याया नाग्निस्तूष्णीं भूमौ बलिनिर्वपणमित्येके। ॥ ११ ॥

अथाकृतिदहनमन्यथानृणस्येष्टापूर्तं देवाः पितरश्च नाश्नन्ति। यस्मात्कुलस्य मङ्गल्यायाकृतिदहनं[5] धीयते[6]। तस्मान्मासे संवत्सरे वा काले पालाशशाखानां सपत्त्राणां षष्ट्यधिकशतत्रयं दर्भांश्च गृह्णाति। शुद्धे देशे गोमयेनोपलिप्ते तिलाक्षतानव-

---

१ ०गच्छेत्। अस्यो० B.

२ बलिं ins Ma Ed.

३ Ed adds विज्ञायते।

४ Thus Vi La; मृतो न दाह्या भवन्त्या Ma Ed; मृतो न दाह्या भवत्या My.

५ माङ्ग० Ma Ed Bh.

६ धीयते Vi My Bh; विधीयते Ma Ed.

कीर्य यद्याहिताग्निः कृष्णाजिनमास्तीर्य तत्राकृतिं तावतीं करोति । तत्रास्थीनि पालाशदण्डाः पत्राणि मांसं सिरा रोमाणि च दर्भा भवन्ति । तस्याङ्गान्युद्दिश्यास्थिगणना । शिरश्चत्वारिंशत्कण्ठं दश बाहू शतमङ्गुलयो दश वक्षस्त्रिंशदुदरं विंशतिर्वृषणे सीवन्यां च सप्त शिश्नं चोरू शतं जानुनी दश जङ्घे विंशतिरङ्गुलयो दशेति विन्यस्य पत्राणि मांसं सिरा रोमाणि च दर्भैः कृत्वा बध्नीयात्तदेवमाकृतिं[1] पुरुषस्य स्त्रिया[2] वा कृत्वा तस्य तस्याग्नौ व्याहृतीर्हुत्वा[3] पूर्ववद्दहत्या भस्मसादाकृतिदहनमित्येके । ॥ १२ ॥

अथैकोद्दिष्टं व्याख्यास्यामो । दशमे चाह्न्यनशनमत्यये[4] गुरूणां त्रिशुक्लाः कृशवृत्तयो[5] घृणावन्तः सकलेन्द्रिया मुक्तयोनिदोषा ब्राह्मणाः पात्रमित्यामनन्त्येकस्त्रयः पञ्च सप्त नवैकादश वा शक्त्या निमन्त्रिता[6] भवन्त्येकादशदिने मृतकनिमित्तत्वान्नैमित्तिकमेकोद्दिष्टश्राद्धममन्त्रकमाचचीरन् । समन्त्रकं संस्कारं कृत्वा कथममन्त्रकं । तस्मात्सपिण्डीकरणवद्धुत्वा श्राद्धमित्येके । गृहस्य पूर्ववच्छोधनं कृत्वा दर्भेण स्थालीं बद्ध्वा तिलोदनं कव्यमिति पाचयेत्ततः स्नातानुलिप्तानहते

---

१ तद् om. La Vi My.
२ स्त्रियो B.
३ These two words only in B.
४ चाह्न्यनशनव्रतम॰ B ; चाह्न्यनशनस॰ Ed La ; चान्यनशनम॰ Vi My.
५ कुशवृ॰ Ma Bh My La.
६ नि om. B.

वाससी वसानान्स्रक्कुण्डलाङ्गुलीयकधारिणो दक्षिणामुखान्प्राचीनावीतिनो दक्षिणाग्रेषु दर्भेषु सतिलेष्वासनेषु दक्षिणतोऽग्नेर्निवेश्य सापसव्यं वाचयतः सिकताभिरुदक्प्रागपरमरत्निमात्रं वितस्त्या[1] दक्षिणतो भागोन्नतं स्थानं कल्पयेन्निधायौदुम्बरीं शाखां पूर्ववद्दर्भेणापसव्यं कृत्वा खननं तिलानामुक्षणमयुग्मानां दक्षिणाग्रं बर्हिषामुदुम्बरपत्त्राणां चास्तरणं । तत्र सतिलाक्षतं पुष्पमेकं निधाय गोत्रनामादिना तस्यार्चनमभिघार्य कव्यस्थालीं तिलोदनेनाङ्गुलाग्रेषु सूक्ष्मं पिण्डं कृत्वा पवित्रपाणिर्वाङ्गुष्ठजानुभ्यां[2] भूमिं पीडयन्निर्वपति । वस्त्रोत्तरीयादिदध्युपदंशबदरप्रभृति[3] भक्ष्यं मुखवासं चार्पयेत् । सतिलाक्षतपवित्रमुदकुम्भं निदध्यात्कूर्पेणाच्छाद्य पिण्डमुपरिष्टात्सतिलाक्षतं पुष्पं दर्भेण निदध्यात्तदीयं वस्त्रं कांस्याद्युपानट्छत्त्रं च सर्वं निवेद्य तेभ्यो दानं पिण्डशेषादि पात्रेषु तेषामभिघार्यार्पयित्वा भुञ्जतामित्यङ्गुष्ठमूलं गृहीत्वा भोजनं पूर्ववदुच्छिष्टमपनीय बहिर्दक्षिणस्यामवटे प्रक्षिप्य सह पिण्डेन तज्जलं स्रावयेत् । वायसेभ्यो बलिदानमथवा श्वचण्डालानुपहते देशे विसर्जनं पिण्डस्य । श्येनकाकादीन्वारयेद्यस्मात्तद्रूपाः पितर आगच्छन्ति । स्नात्वा स्वस्तिवाचनमन्नाद्यदानमौपासनहरणं वैश्वदेवं च कुर्यात्पूर्ववदेकोद्दिष्टमिति । ॥ १३ ॥

---

१ Ed is the only source which reads वितस्त्यायतं।

२ सपवित्र० B.

३ दधि om. Ed La and apparently Bh; दंशं A La; बदरी B.

अथ तथा मासि मासि तद्दिने पिण्डनिर्वापो । मासे तैलसंपर्कस् । तृतीये वा मङ्गलयोगो भवति । यस्मादेकोद्दिष्टात्त्रिमासः षण्मासो वत्सर इति वा प्रेताप्यायनकालस्तस्मात्तेषु[1] कालेष्विष्टकाले पितृस्थानगतायेति क्रमेण त्रिभिः पिण्डैस्तस्य पिण्डस्यारोपणं सपिण्डीकरणं कुर्याद् । वैश्वदेवाघारं श्रपणं पूर्ववत्तिलौदनस्य । वैश्वदेवं हुत्वा प्राचीनावीती वीतिहोत्रमिति समिधं कव्यमाविध्य[2] दग्ध्वा पृथिवीगतानन्तरिक्षगतान्दिविगतानिति पितॄणामावाहनं । जुष्टाकारादिसंवापनान्तं कर्म कुर्याद् । अक्षतादिनार्चयित्वा तिस्रः समिधोऽग्नये कव्यवाहनाय स्वधा नमः स्वाहेत्युत्तरस्यां सोमाय पितृमते स्वधा नमः स्वाहेति दक्षिणतो[3] यमायाङ्गिरस्पतये स्वधा नमः स्वाहेति मध्ये । चक्षुराद्यमिति होमस्य[4] एते य इह पितर[4] उशन्तस्त्वा सा नो ददात्वित्यृचः पितृदैवत्या हुत्वा[5] पृथिवीगतेभ्यः पितृभ्योऽन्तरिक्षगतेभ्यः पितामहेभ्यो दिविगतेभ्यः प्रपितामहेभ्यो[6] जुहुयात् । ॥ १४ ॥

पूर्ववद्यथोक्तस्थाने निहन्मि सर्वमिति तिलोदुम्बरपत्रदर्भानास्तीर्यार्चयित्वा पितॄंस्तत्स्थानात्प्रमुखतस्तस्य च स्थानं

---

1 काले instead of कालस् La Vi My.

2 Thus Vi My La; ॰मासिध्य Ed; ॰मादग्ध्वा Ma; Bh. आवीर्य(!).

3 दक्षिणस्यां B.

4 Thus Ed; La Vi and My are incomplete here; होममेते यः पितर Ma. For the mantra cp. II. 2 : 22. 3.

5 In Ed only.

6 Ma ins. स्वधा नमः स्वाहेति ।

हुत्वा तथैव तन्नाम्नार्चयत्वा मा वाजस्येति पात्रं प्रक्षालयति। तत्राग्निरिन्द्रेत्यन्नं निक्षिप्य सतिलं घृतं[१] चतुर्धा कृत्वा पिण्डान्करोत्ययमोदन[२] इति[२] पिण्डांस्त्रीन्प्रधानान्निर्वपति। प्रथमं ये मृतास्ते पितर इत्युच्यन्ते तत्पूर्वमृताः[३] पितामहास्तेषां पूर्वमृताः[४] प्रपितामहास्तेभ्यः परे ज्ञातिवर्गा भवन्ति। तस्मात्तेषां चतुर्णां पिण्डनिर्वापः क्रमेण भवति। तस्य च स्थाने. तथैव पिण्डमेकं निरूप्य[५] पितृस्थानंगतायेति तत्पिण्डं त्रिधा कृत्वा पिण्डे पिण्डे तथैकैकं[६] भागं[६] निक्षिपति। यस्मादेष परिवत्सरान्ते पितृत्वं प्राप्तवांस्तस्माद्यत्नेनैनमुद्दिश्य[७] पैतृकं कुर्यात्तत्सर्वं जलपिण्डदानादि विनास्य नाम्ना पितृभ्य इति कुर्याद्वाच्यामवटं स्थलवदायतावनतं[८] खनित्वोद-कुम्भेनोर्जं वहन्तीरिति तर्पयित्वा मुखवासादिदक्षिणां दत्त्वा शूर्पेणाच्छादयित्वा पितृभुक्तं पितृजीर्णमित्युपजुह्वान्तहोमो।

१ चरुं instead of घृतं Ed only; this reading may be right.

२ ◦योदनम् all exc. Ed; इति om. Ed.

३ तत्पूर्वमृतकाः Ed. तत्पूर्वं ये मृताः Ma.

४ तेषां पूर्वमृतकाः Ed. तत्पूर्वं ये मृताः Ma. again.

५ निरूप्य all, only Ed निर्वाप्य.

६ Thus Bh; तथैकैकभागं La Vi My; तथैकं भागं Ma; तदेकैक-भागं Ed.

७ यत्नेन only in Ma, but La Vi My (तस्माद्यदेनमु◦) show a trace of it.

८ Thus **Ma**, and this reading is mentioned in a footnote in Ed, where the text runs: स्थण्डिलमवदाय तावद्वनतं; स्थण्डिलव-दायतावनतं La Vi; स्थण्डिलवदायतावनतौं My.

ब्राह्मणानां तर्पणमनेन पूर्ववत् । यथैवैतत्स[1] वत्सो[1] गवाश्वाजमहिषमण्डलेषु यत्र क्वचन[2] गतां गामन्विष्य तामेव तर्पयति तथैव यथाविधिदत्तजलपिण्डदानादि यत्र वा गतं तमेवानूद्दिश्य[3] प्रीणयति[4] । तस्मात्प्रयत्नेन पैतृकं कुर्यान्मा स्म नास्तिको भूदिति ब्राह्मणमिति सपिण्डीकरणं । तस्माद्द्वितीये तृतीये वाह्नि[5] तेभ्यस्त्रयाणां पिण्डानां क्रमेण निर्वापणसंष्टक्रां करोतीति विज्ञायते । ॥ १५ ॥

**पञ्चमः प्रश्नः समाप्तः ॥**

---

१ यथा स वत्सो Ma.

२ क्वचिद् B.

३ Thus Ed; °नुद्दिश्य Ma Bh La Vi My.

४ प्रणय त B.

५ Thus Bh only; चाह्नि the others.

अथ निषेकादिसंस्काराणां प्रायश्चित्तं व्याख्यास्यामः। स्नात्वा संकल्प्य पुण्याहे विधिवत्संस्कारान्कुर्यात्। चतुर्दिशं चतुर्हस्तं गोचर्मेत्युक्तं। गोचर्ममात्रोपलिप्ते पूर्ववदग्निं निधायाभिमुखमासीनमग्निं ध्यात्वाघारं जुहुयात्। सर्वस्यादावाघारे[1] क्रियालोपे विपर्यासे च व्याहृतीर्महाव्याहृतीर्गायत्रीं सावित्रीं मिन्दाहुती[2] वैष्णवं च द्विरावर्त्य[3] हुत्वा पुनराघारं जुहोति। स्थण्डिले परिस्तरणादिसंभारे च प्रमाणवर्जिते हीने मिन्दाहुती सावित्रीं व्याहृतीश्च जुहुयात्। ऋत्विजोरभावे दक्षिणोत्तरयोः प्रागग्रं[4] कूर्चं[4] निधाय ब्रह्मसोमौ संकल्पयति। सर्वं युग्मं प्राच्यामुदीच्यां वाग्रमन्तं[5] च दैविके करोति। सर्वमयुग्मं दक्षिणस्यां[6] पश्चिमस्यां वाग्रमन्तं[6] च पैतृके करोति। होमे न्यूने ऽतिरिक्ते च पूर्णाहुतौ मिन्दाहुती जुहोति। विशेषे ऽनुक्ते स्रुवेण होतव्यमाज्यं हविर्व्याहृतिर्मन्त्रं प्रायश्चित्ते ऽनुक्ते वैष्णवं प्रायश्चित्तमग्नावाज्ये चरौ वा होमे[7] मक्षिकक्रिमिरोमपिपीलिकादिपतने तद्व्यपोह्य बर्हिषोद्दीप्य प्राजापत्यमाग्नेयमग्न्यायतने गोवराहश्वसर्पमण्डूकमार्जाराद्यैर्गमने

---

१ Instead of आघारे Ma : आघारहोमे हीने।
२ Here and elsewhere the Mss. मिन्दाहुतीर् or ०हुतिं।
३ ०वृत्या Ma Vi My ; cp VI. 1 (p. 90, l. 3).
४ प्रागग्रे कूर्चे B.
५ वाग्र० Bh only.
६ Thus La Ed ; दक्षिणपश्चिमस्यां वाग्र० Vi My ; दक्षिणपश्चिमस्याग्र० Ma.
७ होमे in B only.

तत्पदानीदं विष्णुरिति प्रोच्य वैष्णवं रौद्रं च। परिस्तरणादिसम्भाराणां दाहे भेदे च्छेदे नाशे च तत्तत्स्थाने संयोज्य मिन्दाहुती द्विरावर्त्य जुहुयात्। आघारे कृते तस्मिन्नग्नौ समुत्पन्ने ऽग्निं ध्यात्वा तद्भस्मायं ते योनिरिति समिधमारोप्योद्बुध्यस्वेति लौकिकाग्नौ समिधं निधायोज्ज्वाल्य परिषिच्य मनो ज्योतिरयाश्चाग्ने मिन्दाहुतौ व्याहृतीश्च जुहुयात्। सर्वहोमानामन्ते स्विष्टकृत्प्रभृत्यन्तहोमे हीने विष्णोर्नुकादिमिन्दाहुत्याश्रावितादीञ्जुहुयात्। ॥ १ ॥

ऋतौ संगमनं निषेकमित्याहुः। स्वभार्यायामृतुस्नातायां षोडशाहे संगमने हीने ऽग्निमाधायाघारं कृत्वा वैष्णवं ब्राह्ममैन्द्रमाग्नेयं दध्नः स्वाहेत्यङ्गहोमं जयानभ्यातानान्राष्ट्रभृतो हुत्वान्तहोमं जुहोति स्नातामलंकृतां भार्यां पूर्ववद्गच्छेत्। ऋतौ प्रथमे होमं जुहुयात्। ऋतावृतौ संगमनं करोति। ततः सा भार्या गर्भमाधाय पुत्रं जनयति। पुत्रेण पितरः प्रीता भवन्ति। तेनैव स्वर्गं गच्छन्ति। तस्यां पुत्रहीनायां पुत्रार्थमन्यां विवाहं कुर्यात्। यस्य भार्या पतिव्रता पुत्रवती साध्वी स सर्वां सिद्धिमाप्नोति। तस्माद्दुष्टामसाध्वीं बान्धवसंनिधौ त्यक्त्वान्यामुपयच्छेत्[1]। गर्भाधानादिसंस्कारेषु नान्दीमुखे ऽभ्युदयश्राद्धे हीने दैविकेन सहैकाहे पैतृकवत्कृते च तत्कार्यमशुभं भवति। तस्मात्पूर्वेद्युर्दैविकवत्कुर्यात्। द्वौ विश्वेदेवौ चतुरः पितॄन्ब्राह्मणान्वरयित्वा नान्दीमुखाः पितरः

१ ०गच्छेत् B.

प्रियन्तामिति हस्ते यवोदकं दत्त्वाघारान्ते पूर्ववद्धोमं हुत्वान्ते ब्राह्मणान्भोजयेदुद्यन्तं[1] वा दद्यादन्यथा[2] नान्दीमुखं कृत्वा पुनः शुभकर्म कुर्यात्। जातकर्मोत्थानयोर्नान्दीमुखं वर्जयेदित्येके। ॥ २ ॥

गर्भाधानकाले ऽतीते क्रियाहीने विपर्यासे च पूर्ववदाघारान्ते सुवर्णेन गर्भवत्कृत्वा तस्याः कुक्षौ संन्यस्य दर्भेण बन्धयेत्परिषिच्य वैष्णवं ब्राह्मं रौद्रमैन्द्रमाग्नेयं बार्हस्पत्यमङ्गहोमं च हुत्वा पूर्ववद्गर्भाधानं कुर्यात्। विष्णुसूक्तेनोदरमभिमृशति। सुवर्णगर्भमादाय ब्राह्मणेभ्यो दत्त्वा तान्भोजयति। पुंसवनसीमन्तयोश्च गर्भाधानवत्प्रायश्चित्तं हुत्वा तौ करोत्यन्तःपुंवद्रूपयुतं[3] सुवर्णगर्भं पुरुषसूक्तेनोदरमभिमृशतीति[4] विशेषो। विष्णुबलौ हीने वैष्णवं विष्णुसूक्तं चतुरावर्त्य हुत्वा विष्णुबलिः कर्तव्यो। लौकिकाग्नौ गर्भसंस्काराञ्जुहोति। पितुरौपासनाग्नावित्येके। भर्तुर्मरणे तत्पिता भ्राता सपिण्डो योनिबन्धुर्वा कुर्यात्। गर्भिण्याः प्रथमे गर्भे कृता गर्भसंस्कारास्तस्याः सर्वगर्भाणां संस्कारा भवन्तीत्येके। ॥ ३ ॥

कुमारस्य कुमार्याश्च जनने सपिण्डानां दशाहमाशौचं

---

१ Thus B; उद्यतं A and La.

२ Ed ins. नान्दीमुखे हीने वैष्णवं ब्राह्मं रौद्रमेते य इह पितर उशन्तस्त्वा मा नो ददातु पृथिवीगतेभ्य इत्यादि पितृदेवत्या हुत्वा । तथा ।

३ °युक्तं Ed only.

४ °दरमभिमृशति My; °दरमभिमृशन्निति Vi; °दरमभिमृशनमिति La Ed; °दरमभिमर्शनमिति Ma.

विधीयते। पुरुषस्य सपिण्डता षष्ठपुरुषावधिः कन्यायास्त्रिपुरुषावधिर्भवति। आशौचे सूतके प्रेतके च सन्ध्योपासनादिनित्यकर्माण्यन्यानि[1] दैविकपैतृकाणि स्वाध्यायदानप्रतिग्रहाणि च वर्जयति। कुमारे जाते जातकाग्नौ प्रातर्होमे हीने व्याहृतीश्चतुरावर्त्य हुत्वा सायं द्विगुणं सायं हीने प्रातर्द्विगुणं पूर्ववदा दशाहाज्जुहोत्यतीते ऽप्येवं जातकर्म कुर्यात्। जातकाग्नौ समुत्पन्ने तद्भस्म[2] पूर्ववत्समिधमारोप्य लौकिकाग्नौ निधाय प्रायश्चित्तं हुत्वा तथैव जुहुयात्। दशमे ऽहनि जातकाग्निमरण्यामिध्मे[3] वा समारोप्य तमेवाग्निं मथित्वाधाय वास्तुहोमोत्थानहोमौ हुत्वाग्निं समारोप्याप्रमादं निदधाति। उत्थानस्य काले ऽतीते वैष्णवं ब्राह्मं रौद्रं प्रायश्चित्तं हुत्वा पूर्ववत्कुर्यान्नामकरणस्य वैष्णवं मूलहोमं यद्देवादिदिग्दैवत्यं च हुत्वा नामकरणं करोति। ॥ ४ ॥

नक्षत्रहोमे हीने स्कन्ददैवत्यं नवग्रहदैवत्यं वैष्णवं प्रायश्चित्तमन्नप्राशने काले ऽतीते बालेनैवान्ने भुक्ते च जातकाग्नौ वैष्णवं ब्राह्ममाग्नेयमैन्द्रं[4] सौम्यं बार्हस्पत्यं च हुत्वाष्टमे दशमे द्वादशे वा मासे ऽन्नप्राशनं ब्राह्मणभोजनं च कुर्यात्तत्काले। प्रवासागमनपिण्डवर्धनयोर्हीने मूलहोमं जुहोति। चौडके काले ऽतीते मन्त्रवर्जं कृते च जातकाग्नौ वैष्णवं मूलहोमं

१ सन्ध्योपा० all exc. Ed.
२ भस्मनि Ed only.
३ समिधि instead of इध्मे B.
४ सौरं instead of ऐन्द्र Ma.

ब्राह्मं वारुणमाग्नेयं रौद्रं च कृत्वा यथाशक्ति सुवर्णपशुदानब्राह्मणभोजनानि कृत्वा चौडकं कुर्यात्। ॥ ५ ॥

अथ निषेकादीनां सामान्यप्रायश्चित्तं। विष्णोर्नुकादिमिन्द्राकृत्याआवितादीन्द्विरावर्त्य कृत्वा तत्तत्कर्म कुर्यादिति केचित्। अथवाप्युपनयनं यावत्तावत्कालं गर्भाधानादिचौडकान्तेषु हीनेषु तन्त्रयित्वैकहोमे कुर्याच्चेत्पिता चान्द्रायणं पुत्रः प्राजापत्यं चरित्वा ब्राह्मणभोजनसुवर्णपशुदानानि कृत्वा विष्णोर्नुकादिमिन्द्राकृत्याआवितादीन्रौद्रं मूलहोमं वैष्णवं च द्विरावर्त्य प्रत्येकं हुत्वा तन्त्रयित्वैकहोमे गर्भाधानादीन् कुर्यात्। आघारान्ते होमश्चैका भवत्यादावन्ते च प्रत्येकं परिषेकं करोतीति विशेषः[१]। ॥ ६ ॥

ब्राह्मण्यां ब्राह्मणाज्जातमात्रस्य[२] ब्राह्मणस्य प्रथमजन्म स्यादुपनयनसंस्कारे द्वितीयं भवति। द्वितीयजन्मन्याचार्यः पिता सावित्री माता। द्वाभ्यां जन्मभ्यां द्विजो भवत्यष्टवर्षं ब्राह्मणमुपनयीतेति श्रुतिस्तस्माद्गर्भाधानाद्यष्टमे वर्षे ब्राह्मणस्योपनयनं श्रेष्ठं। तदसम्भवे नवमे दशमे वाप्या षोडशात्कुर्यात्। षोडशे वर्षे ऽतीते पूर्वोक्तमुद्दालकप्रायश्चित्तं[३] गर्भाधानादिसंस्कारं च कृत्वा शुद्धे[४] ब्राह्मणभोजनसुवर्णपशुदानानि

---

१ इति विज्ञायते instead of इति विशेषः Vi My.

२ ०जातमात्रे A, ०जातमात्रो La.

३ ०लकप्रायश्चित्तं Ed Bh; ०व्रतं Ma Vi My; ०लकप्रायश्चित्तं व्रतं L

४ शुद्धो Vi My.

कुर्यात्पिता चान्द्रायणं चरित्वा तस्य जातकाग्निमाधायाघारं हुत्वा भिन्दाहुतौ पूर्णाहुतौ ब्राह्मं वैष्णवं चाष्टशतमावर्त्य हुत्वा पूर्ववदुपनयनं कुर्यात्पितृभ्रातृज्ञातिसगोत्रमातुलादिषु यः शुचिर्विद्वानुपनयनं करोति। अन्यथा मलान्धकारौ तेन याजयति। पित्रादिबान्धवालाभे ऽन्यं ब्राह्मणमुपनयनार्थं भजेत। व्याधिदुर्भिक्षाद्यैरन्त्यजातौ न्यूने समाश्रिते सुवर्णपशुभूम्यादीन्दत्त्वाग्निमाधाय वैष्णवं यद्देवादीन्ब्राह्ममैन्द्रं वारुणं मूलहोमं व्याहृत्यन्तं हुत्वोपनयनं कुर्यात्। ॥ ७ ॥

उपनयनप्रभृति ब्रह्मचारी पूर्ववत्स्नात्वा सन्ध्यामादित्यं चोपस्थाय तर्पणं ब्रह्मयज्ञं च कृत्वा सायंप्रातरा समावर्तनान्नित्यमग्नौ समिद्भिर्जुहुयात्। नित्यस्नानविहीने[1] पूर्ववत्स्नात्वा जुम्बकाय स्वाहेति निमज्ज्य नारायणं ध्यायन्स्वजुम्बकेनाघमर्षणसूक्तेनाघमर्षणं कृत्वा वैष्णवमन्त्राञ्जपति। सन्ध्योपासनविहीने[2] स्नात्वा दश प्राणायामान्कृत्वाष्टशतं सावित्रीमधीत्य सन्ध्यामुपास्य वैष्णवान्सौरमन्त्रांश्च जपति। पुनःसन्ध्यागमादनशनं कृत्वा सन्ध्यामुपासीतेत्येके। तर्पणहीने द्विगुणं तर्पयति ब्रह्मयज्ञविहीने पुरुषसूक्तपूर्वं यजुःसंहितां स्वाध्यायं करोति। प्रातःसमिद्धोमे हीने सायं द्विगुणं सायं हीने प्रातर्द्विगुणं। दिनत्रये स्नानादौ हीने पूर्ववत्स्नानजपं[3] कृत्वा सौरमाग्नेयं च

१ नित्यस्नाने हीने La Vi My.
२ सन्ध्योपासनहीने Ma La Vi My.
३ Thus Bh La Vi My ; ०जपौ Ma Ed.

हुत्वा समिद्भिर्जुहुयात्सप्तरात्रौ हीने नित्यकर्मण्यवकीर्णो[1] भवति । ॥ ८ ॥

अथावकीर्णप्रायश्चित्तं । सप्तरात्रं स्नानसन्ध्योपासनस्वाध्यायसमिद्धोमभैक्षचर्यादिहीने मेखलोपवीताजिनदण्डधारणादिब्रह्मचर्यवर्जिते[2] च पादकृच्छ्रमुपवासं वा कृत्वाग्निमाधाय परिस्तीर्य परिषिच्याज्येन पाहि नो अग्न एनसे पाहि नो विश्ववेदसे यज्ञं पाहि सर्वं पाहि कामावकीर्णः कामाभिद्रुग्धः सं मा सिञ्चन्त्विति[3] हुत्वा पुनरूर्जा सह रय्या पाहि चतसृभिः[3] स्वाहेत्यतो देवा इदं विष्णुरिति जुहुयात् । पितृज्येष्ठयोरन्येषामुच्छिष्टभोजने मधुमत्स्यमांससूतकप्रेतकान्नाद्यभोज्यभोजने[4] च पुनरुपनयनं करोति । ॥ ९ ॥

अथातः पुनरुपनयनं । पादकृच्छ्रमुपवासं वा कृत्वाग्निमाधायाघारान्ते व्याहृत्या पलाशसमिधो[5] हुत्वाज्येन विष्णुसूक्तं मिन्दाहुत्याश्चावितादीन् पूर्णाहुती व्याहृतीश्च हुत्वा पूर्ववदुपनयनं करोति । वपनमेखलाजिनदण्डधारणव्रतभैक्षा-

---

१ Thus B; ०कीर्णी Vi La Ed; ०कीर्णा My.

२ ०चर्यादिवर्जिते Ma.

३ Here again the two groups diverge widely. I have accepted the reading of B; Ed: सिञ्चन्त्विति ग्रहैर्भि (var. चतुर्ग्रहैर्भि) रूर्जां पते पाहि चतसृभिः। Vi: ग्रहभिरूर्जां पते पाहि च०। My: ग्रहैभि-युज्यायवे पाहि च०। La, on the whole, sides with group A.

४ Thus Ma Bh La Vi My; ०प्रेतकाद्यभोज्य० Ed.

५ पालाश० Ma Ed La Vi;—समिधौ La Vi My.

चरणानि[१] पुनःसंस्कारे वर्ज्यन्ते[२]। ऽथवा सावित्रीमष्टशतमावर्त्याभिमृश्य तथैव घृतं प्राश्नीयाद्गुरोरुच्छिष्टं वा भुञ्जीत। ततः[३] पूतो भवति। ॥ १० ॥

पारायणव्रतबन्धविसर्गं च काले[४] ऽतीते[४] हीने[५] ऽप्युपनयनाग्निमाधायाघारान्ते तत्तद्व्रतसूक्तं[६] वैष्णवं चतुरावर्त्य हुत्वा वेदव्रतानां बन्धं विसर्गं च कुर्यात्। उपाकर्मणि चतुर्वेदादिमन्त्रान्ब्राह्ममार्षं चतुरावर्त्य हुत्वोपाकर्म कुर्वीत। श्रावणहोमं हुत्वान्ते सावित्र्या सहस्रसमिधो जुहोति। श्रावणे चोपाकर्मवत्प्रायश्चित्तं विधीयते। प्राजापत्यादिवेदव्रतान्याचरन्वेदानधीयीतानधीयानः सर्वकर्मबहिष्कार्यो भवत्यशक्तो ऽपि यत्किंचिच्छाखामधीयीत। समावर्तनं हुत्वा स्नातको व्याहृत्याग्नावाज्यमा पाणिग्रहणान्नित्यं जुहोति। समावर्तनक्रियाहीने पाणिग्रहणे कृते चान्द्रायणं चरित्वाग्निमाधाय सावित्रीं वैष्णवं ब्राह्ममार्षमाग्नेयं शतमावर्त्य हुत्वा समावर्तनं[७] हुत्वा[७] पुनर्विवाहं[८] करोति[८]। पुनर्विवाहे पूर्ववत्सर्वं कुर्यात्। ॥ ११ ॥

---

१ भैक्षचर० Ed only.
२ Thus Ed La My; वर्ज्यं। तथैव Vi; वर्ज्याः B.
३ स ins. La Vi My.
४ कालातीते Ma Ed Bh.
५ क्रियाहीने Ed only.
६ तत् double La Vi My, once Ma Ed.
७ La Vi My om.
८ Ed om.

ब्राह्मणो ब्राह्मणीं नग्निकां गौरीं वा कन्यां क्षत्रियः क्षत्रियां वैश्यो वैश्यां वरयेदष्टवर्षादा दशमान्नग्निका[1] रजस्यप्राप्ते दशवर्षादा द्वादशाद्गौरीत्यामनन्ति[2] । समावर्तनं कृत्वा विवाहकाले ऽतीते क्रियाहीने ऽप्युपनयनाग्नावाघारं कृत्वा ब्राह्मं वैष्णवमाग्नेयं शतमावर्त्य कृत्वाग्न्यर्थं पुत्रार्थं च ब्रह्मादिषु चतुर्षु पूर्वालाभे परेण ब्राह्मणो विवाहं कुर्यादासुरादिष्वसत्पुत्रा जायन्ते । तस्मादासुरेण गान्धर्वेण विवाहे कृते चान्द्रायणं चरित्वाग्निमाधाय ब्राह्मं त्रयस्त्रिंशद्वैष्णवं सावित्रीमाग्नेयं शतमावर्त्य कृत्वा ब्रह्मादिष्वेकेन पुनर्विवाहं कुर्यादासुराद्द्विगुणं गान्धर्वे गान्धर्वाद्द्विगुणं राक्षसे राक्षसाद्द्विगुणं पैशाचे प्रायश्चित्तं करोत्यासुराद्यैः शस्तैः क्षत्रियवैश्यौ विवाहं कुर्यातां पूर्वेषामलाभे परेण । ब्राह्मणेनासुरगान्धर्वौ च विधिना कर्तव्यावित्येके । होमं कृत्वा राक्षसपैशाचौ चेत्यपरे । ऽन्यथा कन्यागमनप्रायश्चित्तं करोति । ॥ १२ ॥

रजःप्राप्तौ[3] कन्यां[4] विवाहे कृते[4] कृच्छ्रं चरित्वाग्निमाधाय वैष्णवं सावित्रीं शतमावर्त्य कृत्वा तां पुनर्विवाहं कुरुते । विवाहे होमकाले कन्याया[5] रजस्युत्पन्ने तां स्नापयित्वान्यदस्त्रं परिधाप्य पुण्याहं कृत्वा प्रोक्षणैः प्रोक्ष्य मिन्दाहुत्या-

---

१ नग्निकां La Ed.

२ Thus Ma My; गौरीमित्या॰ Vi Ed La.

३ Thus Ma Ed Bh; रजःप्राप्तां Vi; रजःप्राप्त My; रजःप्राप्तकन्याविवाहे La.

४ कन्याविवाहे Vi My.

५ कन्या Vi My; Ma and La om. this word.

आवितादीन्व्याहृतीश्च कृत्वा कर्म प्रवर्तेत[1]। तत्क्रियापरिसमाप्ते सा वधूरशुचिर्भवति। ज्येष्ठे तिष्ठत्यनुजेन विवाहे कृते परिवेत्तानुजश्चान्द्रायणं चरित्वा परिवित्तिं ज्येष्ठं विवाहं कारयित्वा पूर्ववत्प्रायश्चित्तं कृत्वा पुनर्विवाहं कुर्यात्[2]। ॥ १३ ॥

परदेशगते ज्येष्ठे द्वादशवर्षेऽतीते मृतस्येवाकृतिदहनादि कर्म कृत्वा प्रायश्चित्तं कृत्वा विवाहं कुरुते। तस्मिन्पुनरागतेऽनुजः[3] पूर्ववत्प्रायश्चित्तं[4] कृत्वा विवाहं[4] करोति। ब्रह्महत्याद्यैः पतिते ज्येष्ठे बान्धवसन्निधौ वारिपूर्णघटत्यागेनैव तं त्यक्त्वा चान्द्रायणं चरित्वा विवाहं कुरुते। विवाहान्ते वधूगृहाद्विवाहाग्निमौपासनं वधूं च स्वगृहमानीयोत्तरस्यां यथोक्तेऽग्निकुण्डे पूर्ववद्बर्हिषा खनित्वा प्रादेशमात्राः प्रागन्ताश्चोत्तरान्तास्तिस्रस्तिस्रो[5] लेखाः षडुल्लिखित्वा[6] प्रोक्ष्य हिरण्यशकलं व्रीहीन्वा निधाय तत्राग्निं निदधाति। सोऽग्निर्नित्यं[7] धार्यश्चतुर्थेऽहन्याग्नेयस्थालीपाकं वैश्वदेवं च कुर्यादित्येके। ॥ १४ ॥

पाणिग्रहणप्रभृति गृहस्थोऽपि नित्यं स्नानं सान्ध्योपासनं ब्रह्मयज्ञं च कृत्वा नित्यमग्न्याधानाद्विवाहाग्नावौपासने परिस्तीर्य परिषिच्य सायंप्रातर्व्रीहिभिरग्निहोत्रहविषा वा

१ प्रवर्तेरन् Vi My.
२ कुरुते Vi My.
३ चानुजः A and La.
४ प्रा० कृत्वा वि० om. Ed; कृत्वा वि० om. La Vi My.
५ तिस्रः once A and La; Ma and La read ०त्तरान्तास्ति०.
६ ०ल्लिख्य A.
७ ०र्नित्यो A and La.

होमं जुहुयात् । सायंहोमे हीने प्रातरग्नये स्वाहा वैश्वानराय स्वाहेति प्रातर्होमे हीने सायमग्नये स्वाहा पथिकृते स्वाहेति प्रायश्चित्ताहुतीर्हुत्वा पूर्ववद्वा त्र्यहाज्जुहोत्यौपासने ऽजस्रे वर्तमाने त्र्यहे होमे विच्छिन्ने पतिरेकोपवासं कृत्वा तत्पुनराधानं करोति । सद्यो ऽनुगते क्षिप्रं त्र्यहाभ्यन्तरे ऽग्निं ध्मात्वा तद्भस्मायं ते योनिरिति समिधमारोप्योद्बुध्यस्वेति लौकिकाग्नौ समिधं निधाय पूर्ववत्प्रायश्चित्तं कृत्वा नित्यं जुहुयात् । अनुगते त्र्यहे ऽतीते ऽन्याग्निनापि संसर्गे च पत्नी प्राजापत्यं पादकृच्छ्रं वा पतिरेकोपवासं कृत्वा पुनराधानं कुर्यात् । ॥ १५ ॥

अथातः पुनराधानं । पूर्ववदरण्यां मथितं व्याहृत्या श्रोत्रियागारादाहृतं वाग्निमाधाय पूर्ववदाघारं जुहुयादग्निं परिषिच्योत्पूतमाज्यं स्रुवेणादाय स्रुचि चतुर्गृहीतं गृहीत्वा पूर्णाहुती[1] जुहोति । तथा चतुर्गृहीतं गृहीत्वा तन्तुं तन्वन्नुद्बुध्यस्वाग्ने त्रयस्त्रिंशत्तन्तव इति तन्तुमतीस्तिस्रो ऽग्ने ऽभ्यावर्तिन्नग्ने ऽङ्गिरः पुनरूर्जा सह रय्येत्यभ्यावर्तिनीश्चतस्रो मनो ज्योतिरिति मनस्वतीं प्रजापतिर्जयानिति प्राजापत्यमन्वग्निरुषसामित्यनुख्यामयाश्चाग्ने ऽसीति प्रायश्चित्तीयामुद्वयं तमस इति ज्योतिष्मतीमायुर्दा अग्न इत्यायुर्दामिन्द्राहुती व्याहृतीश्च प्रत्येकं चतुर्गृहीतं गृहीत्वा पुनराधानं हुत्वा[2] पूर्ववदौपासनं जुहोत्यौपासनं धार्यं कर्तुमशक्तो ऽध्वानं

---

1 Before पूर्णाहुती ( ॰तिं Ed My, ॰तीर् Vi ) Ma ins. द्विः कृत्वो ।
2 कृत्वा Vi My.

गमिष्यन्वाप्ययं ते योनिरित्यरण्यां समारोप्य पुनर्जातवेद[1] इत्यहरहर्मथित्वा जुहुयात् । अथवा या ते अग्न इत्यात्मन्युपावरोहेति समिधं[2] वा समारोप्य तेनैव लौकिकाग्नाववरोप्य जुहुयात् । समारोपणे कृते होमे विच्छिन्ने पूर्ववत्प्रायश्चित्तमा द्वादशाहाज्जुहोति । द्वादशाहे विच्छिन्ने पुनराधानं करोति । मासे विच्छिन्ने प्राजापत्यं षण्मासे चान्द्रायणं संवत्सरे प्राजापत्यं तप्तकृच्छ्रं चान्द्रायणं चरित्वा तद्द्रव्यं ब्राह्मणेभ्यो दत्त्वा पुनराधानं कुर्यादग्नौ त्यक्ते भ्रूणहा भवति । पर्वणि पर्वणि स्थालीपाकः प्रसिद्धः[3] । एवमौपासनं[3] कृत्वा[3] पञ्च महायज्ञान्करोति । ॥ १६ ॥

ब्रह्मयज्ञो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति पञ्च महायज्ञाः । सावित्रीपूर्वं[4] नित्यमिषे[4] त्वोर्जे त्वेति यथाकामं नैमित्तिके सावित्रीपूर्वैर्द्वादशसूक्तैरग्निमीडे पुरोहितमिषे त्वोर्जे त्वाग्न आयाहि शं नो देवीरिति चतुर्वेदादिमन्त्रैर्वा स्वाध्यायो ब्रह्मयज्ञः । पक्वेनान्नेन वैश्वदेवेन देवेभ्यो होमो देवयज्ञः । पितृभ्यो बलिहरणं पितृयज्ञो । भूतेभ्यो बलिदानं भूतयज्ञो । ऽतिथिभ्यो ऽभ्यागतेभ्यो ऽन्नप्रदानं[5]

---

१ ०वेदस La Vi My.

२ Thus A and La ; समिधि B.

३ प्रसिद्धमेवौपासनं कृत्वा Vi ; प्रसिद्धमेवमौपासनं कृत्वा My ; कृत्वा La.

४ Thus La Ed ; Ma has नित्यं but not सावित्रीपूर्वं ; Vi My incomplete.

५ अन्नदानं B.

मनुष्ययज्ञो । गृहस्थो यत्पक्वं भुञ्जीत पक्वेन[१] तेन भोक्ष्यन्न-भोक्ष्यन्वापि स्वगृहे तस्मिन्नौपासनाग्नौ लौकिकाग्नौ वा सायंप्रातर्वैश्वदेवं जुहुयात् । रात्रावमन्त्रकं बलिहरणं पत्नी वा करोत्येकाहे वैश्वदेवहोमे हीने मनो ज्योतिरिति प्रायश्चित्तं हुत्वा वैश्वदेवं जुहुयात् । ॥ १७ ॥

त्र्यहे होमे हीने तन्तुं तन्वन्नित्यादि[२] तन्तुमतीर्वैष्णवं जुहुयाद्द्वादशाहे ऽग्नावौपासने[३] स्थालीपाकं हुत्वा पूर्ववदव-कीर्णप्रायश्चित्तं जुहोति । प्रवासे ऽध्वनि परस्य गेहे च भोक्ष्यंल्लौकिकाग्नाविन्धनाभावे भस्मापोह्याङ्गारे ऽङ्गाराभावे जले वा जुहोत्यन्नाभावे जलेनैव वैश्वदेवं कुर्याद्वैश्वदेवान्ते यत्नेनातिथिमभ्यागतं च भोजयति । तयोरागतयोर्भोजने हीने[४] वैश्वदेववत्प्रायश्चित्तं करोति । पाणिग्रहणप्रभृति गृहस्थधर्माण्यनुतिष्ठेत्[५] । चतुर्थीव्रतक्रियाहीने संगमने कृते चान्द्रायणं चरित्वाग्निमौपासनमाधाय वैष्णवं ब्राह्ममार्ष-माग्नेयं[६] बार्हस्पत्यं च हुत्वा पुनश्चतुर्थीहोमं कुर्यादौपासने स्थालीपाकादीन्पाकयज्ञसंस्थाञ्जुहोति[७] । ॥ १८ ॥

---

१ Ed om.
२ इत्याद्यैर् Ed.
३ Vi My ins. विच्छिन्ने, Ma हीने ।
४ च ins. Ma Ed.
५ ०धर्मान् instead of ०धर्माणि Vi Bh.
६ ब्राह्ममाग्नेयमार्षं B.
७ संस्कारान् instead of संस्थान् B.

अथातः पाकयज्ञसंस्थानां प्रायश्चित्तं । द्वाविंशद्यज्ञेषु पञ्चमहायज्ञानुष्ठानं प्रथमो यज्ञः । तस्य प्रायश्चित्तं पूर्वमेवोक्तं । पर्वणि स्थालीपाके हीने पादकृच्छ्रमुपवासं वा कृत्वाग्निं प्रणम्य प्राणायामं कृत्वाग्निदैवत्यं पथिकृद्दैवत्यं च स्थाल्यां द्वौ चरू पक्त्वाग्निं परिस्तीर्य परिषिच्याज्येनाग्नेयं सौम्यं स्विष्टाकारं मिन्दाहुती वैष्णवं व्याहृत्यन्तं हुत्वा पूर्ववत्स्थालीपाकं द्विगुणं जुहुयात् । आग्रयणहोमे हीने नवान्ने भुक्ते[1] पादकृच्छ्रमुपवासं वा कृत्वा स्थाल्यामैन्द्राग्नं चरुं श्रपयित्वा पक्वेनाज्यमिश्रेणाग्नेयमैन्द्रं वैश्वदेवं स्विष्टाकारं पूर्णाहुती वैष्णवं च हुत्वा पूर्ववदाग्रयणं कृत्वा ब्राह्मणान्भोजयित्वा नवान्नं भुञ्जीत । यथोक्तकाले[2] ऽष्टकाहोमं हुत्वा पितृभ्यः पिण्डं निरुप्य[3] ब्राह्मणान्भोजयेदथवाष्टकेति ब्राह्मणान्भोजयेदुद्यन्तं[4] वा ददात्यष्टकाहीने वैश्वदेवपैतृकौ द्वौ चरू पक्त्वाज्यपक्वाभ्यां वैश्वदेवं वैष्णवं रौद्रं याम्यं पैतृकहोमं[5] च त्रिरावर्त्य पूर्ववदष्टकां कुर्यात् । ॥ १९ ॥

पिण्डपितृयज्ञे मासिश्राद्धे च हीनेऽष्टकावत्प्रायश्चित्तं जुहोति । चैत्रीयज्ञविहीने चरुं पक्वाज्येन[6] चरुणा सौम्यं

१ च ins. B.

२ यथोक्ते काले La Vi Ed.

३ निर्वाप्य Ma.

४ Thus Ma Bh Ed ; °द्यतं La Vi My.

५ पैतृकं होमं La Ed ; होमं om. Vi My (reading °कं)

६ पक्वा माज्येन La Vi My.

श्रीदैवत्यं विष्णुसूक्तं मिन्द्राकृत्याश्रावितादीन्हुत्वा पूर्ववच्चैव्या यजेताश्वयुजीयज्ञविहीने चरुं पक्काज्यचरुभ्यां[1] रुद्रसूक्तं मिन्द्राकृत्याश्रावितादीन्हुत्वा पूर्ववदाश्वयुज्या यजेत । प्रातर्होमान्ते विष्णोर्नित्यार्चने हीने सायं द्विगुणं सायं हीने प्रातर्द्विगुणमर्चनं हविर्निवेदनं च कुर्यादा द्वादशाहाद्द्वादशाहे ऽतीते पुरुषसूक्तविष्णुसूक्ताभ्यां हुत्वा पूर्ववदभ्यर्च्य हविर्निवेदयति । ॥ २० ॥

षष्ठः प्रश्नः समाप्तः ॥

~~~~~~~~~~~~~~~~~~

१ पक्काज्येन चरुणा La Vi My.
~~~~~~~~~~~~~~~~~~

अथ मृतसंस्कारप्रायश्चित्तं ' जातकसंस्कारो मृतसंस्कारश्चेति द्वौ संस्कारौ भवतः ' पूर्वेणेमं लोकं[1] परेण[1] परलोकं जयति ' मृतसंस्कारः[2] शरीरस्य दहनमित्याहुः ' निर्दोषशरीराहुतिरग्नेः प्रियतमा भवति ' तयाहुत्या स मृतको देवलोकं गच्छति ' मातापित्रोः यो ऽन्यो भ्राता सपिण्डः सगोत्रः पितुर्मातुश्च योनिबन्धुर्गुरुशिष्यर्त्विजो वा पत्न्याः पतिः सुतः पत्युर्भ्राता सपिण्डः सगोत्रः पितुर्मातुश्च योनिबन्धुर्वा पुत्रस्य पित्रादयो मृतस्य शरीरं दाहयति ' मृतस्य संस्कारे कृते संस्कर्तुः सर्वसंपत्समृद्धिः स्यादन्यथा भ्रूणहत्यामवाप्नोति[3] ' तस्माद्ब्रह्ममेधेन पितृमेधेन वा विधानेन पूर्ववदग्निर्यजुर्भिः सेनेन्द्रस्य वाचस्पते विधे नामन्वाचस्पते वाचो वीर्येण सोमः सोमस्य वाचस्पते ऽच्छिद्रया वाग्घोतेति सप्तभिर्मन्त्रैराहिताग्नेः शरीरं पञ्चाग्निभिस्त्रेताग्निभिर्वा दाहयति ' अग्निर्यजुर्भिः सेनेन्द्रस्येति द्वाभ्यामौपासनाग्निना गृहस्थमनाहिताग्निं तदुपनयनाग्निना ब्रह्मचारिणं च दाहयेत् ' अस्मात्त्वमधि[4] भूः पृथिवीं गच्छतु भुवो ऽन्तरिक्षं गच्छतु सुवर्दिवं गच्छत्विति चतुर्भिर्मन्त्रैरित्येके ' ॥ १ ॥

आहिताग्निरनाहिताग्निश्च पूर्वं पत्न्या मरणे स्वकीयाग्नेरर्धमादाय तदग्निना तैर्मन्त्रैस्तां दाहयित्वान्यामुपयम्य पुन-

---

१ लोकमपरेण Ed only.

२ मृतस्य सं॰ all but Ma.

३ अव om. B.

४ Thus the Bh. only ; all the others त्वमसि or त्वमस्मि ।

रग्निमादधीत । सहमरणे सहैकचितायां दम्पती दाहयति । कृतचौडमनुपनीतं जातकाग्निना लौकिकाग्निना वास्माच्चमधीत्येकर्चया दाहयेत् । जातदन्तस्य पितृमेधवत्तूष्णीं[1] दहनं कुर्यादजातदन्तं भूम्यामवटे ऽपिदधाति । अथवा कृतचौडौ कन्याकुमारौ जातदन्तं कुमारं मृतदारं विधवामितरांश्च तूष्णीं मृतकं स्नापयित्वा शाखया श्मशानं पूर्ववदपेत वीतेति संमृज्य[2] चितायां प्रेतमारोप्य हिरण्यशकलतिलतण्डुलान्या[3] वो[3] वहेत्यास्ये[3] निदधाति आज्यमस्मात्त्वमधीति व्याहृतीश्च हुत्वा वातास्ते वान्त्विति शिवातं कृत्वेमा आपो मधुमत्य इत्यादिभिरुदकुम्भं परीत्योत्क्षिप्य कपालशेषोदकं भूः पृथिवीमित्यास्ये दत्त्वा कपालसंतपनाग्निनास्मात्त्वमधीत्येकर्चया सावित्र्या वा दाहयति ॥ २ ॥

शवे ऽन्याशौचयुक्ते श्वकुक्कुटसूतिकारजस्वलाद्यस्पृश्यस्पर्शने च मृतकं पञ्चगव्यैः कुशतोयैश्च[4] स्नापयित्वा प्रोक्षणैः प्रोक्ष्य विधिवद्दहनं करोति । देशान्तरे मृते दहनविहीने श्वकाकाद्यैः शवे जीर्णे तदस्थीन्यादाय काषायतोयैः पञ्चगव्यैः कुशतोयैश्च प्रक्षाल्याकृतिं कृत्वा तस्याग्नौ वैश्वदेवं याम्यं पैतृकं व्याहृतीश्च प्रायश्चित्तं हुत्वा विधिवद्दहनं कुर्यादमन्त्रकं

---

१ Instead of पितृमेधवत् (thus B) पितृमेधवर्जं A and La.

२ संमार्ज्य Vi My.

३ ? ०तण्डुलान्यावव्हे० Ma; ०तण्डुलान्य श्वो वहे० Ed; ०तण्डुलानावो वहे० Vi My; ०दधितण्डुलानापो वहे० La; cp. V. 3: 74. 1

४ कुशोदकै० B.

शवे दग्धे तदस्थीन्यादाय पयसाज्येन प्रक्षाल्याकृतिं कृत्वा पूर्ववत्प्रायश्चित्तं कृत्वा समन्त्रकं दाहयति । तदस्थ्नामप्यलाभे[1] दशाहादूर्ध्वं पालाशपर्णैर्विधानेनाकृतिं कृत्वा प्रायश्चित्तान्ते तदग्निना दाहयेत्कर्तुरेवाशौचं भवति । त्र्यहं बलिनिर्वापण-माशौचं चेति केचित्सूतिकां मृतामुदक्यां च दावाग्निना[2] मन्त्रहीनं[3] दाहयित्वा दशाहेऽतीते तदस्थिभिः पालाश-पर्णैर्वाकृतिं कृत्वा[4] दहनं करोत्यथवा तदङ्ग्येव काषायतोयैः पञ्चगव्यैः कुशतोयैश्च स्नापयित्वा पुण्याहं कृत्वा प्रोक्षणैः प्रोक्ष्य विधिवद्दहनं कुर्यादित्येके । ॥ ३ ॥

सगर्भाया[5] मरणे स्पन्दमानेनोदरेण[6] जीवन्तं गर्भमालक्ष्य भर्ता पुत्रो ऽन्यो बन्धुर्वा वैद्यकुशलाभ्यां[7] नाभ्युपस्थयोरन्तरे[8] गर्भं[9] परिहरन्हिरण्यगर्भ इति शस्त्रेणोत्पाटयति । शस्त्र-स्पर्शनाद्गर्भस्य मरणे पतितो भवति । जीवन्तमपत्यमुन्मुच्य स्नापयित्वादाय धात्रीं लोकमातरमभ्यर्च्य तस्यान्यां मातरं कल्पयति । प्रेतायाः कुक्षावाज्येन प्राणाय स्वाहापानाय स्वाहेति

१ Thus La Ed; तदस्थाम॰ My; तदस्थीनाम॰ Ma; तदस्थ्नो Vi.

२ दवा॰ B.

३ शूद्रैः ins. La Vi My only.

४ प्रायश्चित्तं कृत्वा ins. Vi My.

५ अथ सग॰ Ma; Vi गर्भिण्या instead of सग॰।

६ स्यन्द॰ Ed.

७ Thus my conjecture; वैद्यकुशल्याभ्यां Ma; वैद्यशल्याभ्यां La Ed Vi My.

८ ॰न्तरं Vi My.

९ गव्यं Vi My.

कृत्वा निर्व्रणं कृत्वा तां स्नापयित्वा विधिवद्दहनं करोति । कुमारस्य जातकाग्नौ पूर्ववज्जातकं कुर्यात् । सूतकप्रेतकयोरेकाहसंनिपाते[1] तन्त्रयित्वा वास्तुहोमं कृत्वा पृथगेवोत्थानहोमं पिण्डनिर्वापं[2] च करोति । ब्राह्मणाद्यैश्चण्डालान्तैरद्भिः सर्पेण दंष्ट्रिणाशनिपातेनाग्निना पशुना वा पापमरणे तस्याशौचवाक्योदकम्पनाश्रुशवभरणानुगमनदहनोदकबलिपिण्डदानादि कस्यचिन्नैव[3] कुर्यादेतानि । कर्तुश्चान्द्रायणं तप्तकृच्छ्रं प्रायश्चित्तं भवति । पापमृतस्य शरीरं दावाग्निना[4] शूद्रैर्दाहयित्वा दशाहे ऽतीते नारायणबलिं कुर्यादथवा पालाशपर्णैरेवाकृतिदहनं करोति । शवस्य दहनकाले[5] ऽतीते क्रियाहीने विपर्यासे च प्रेतकर्मणि सर्वत्र तिलैरेव वैश्वदेवं याम्यं पैतृकं व्याहृतीश्च प्रायश्चित्तं जुहोति । शवस्य दहनार्थं होमे कृते तदग्नावुत्सन्ने पूर्ववद्भस्म[6] समिधमारोप्य लौकिकाग्नौ निधाय प्रायश्चित्तं कृत्वा तेनाग्निना दहनं कुर्यात् ॥ ४ ॥

उपनयनादूर्ध्वं ब्राह्मणस्य मरणे सपिण्डानां दशाहमाशौचं विधीयते । दन्तजननादूर्ध्वं त्र्यहं नामकरणादूर्ध्वमेकाहं

१ एकाहे instead of एकाह० La Ma Vi My.
२ ०निर्वापणं Ma Ed Bh.
३ कस्यचिदपि नैव La Vi My.
४ दवा Ma again.
५ दहने Ed La Bh.
६ Thus Bh La Vi My ; भस्मनि Ma Ed.

जननादूर्ध्वं सद्यः शौचं। स्त्रियाश्च[1] मरणे विवाहादूर्ध्वं दशाहमष्टवर्षादूर्ध्वं त्र्यहं चौडकादूर्ध्वमेकाहं पूर्वं[2] सद्यः शौचं। मातापित्रोर्भ्रातॄणां च सर्वत्र[3] दशाहमेव। गर्भे मृते गर्भिण्यास्तन्मासतुल्यैरहोभिराशौचं। सूतके चान्यसूतके प्राप्ते प्रेतके चान्यप्रेतके प्राप्ते पूर्वाशौचेन शुद्धिः स्यादितरस्य प्राप्ते ऽपरस्यैवाहोभिः[4] शुद्धिर्भवति[4]। असपिण्डशवस्य स्नानालंकरणे कृते त्र्यहं[5] दिवसं वा। वहने कृते[5] स्नात्वा दश प्राणायामान्कृत्वा नक्षत्रदर्शनात्पूर्वं ग्रामाद्बहिरासीत। तावदेवाशौचं। रात्रौ सूर्योदयात्पूर्वमासीतान्यथा तद्ग्रामे प्रविष्टे शवभर्तुरेकाहं तद्गृहे प्रविष्टे त्र्यहं तत्र भोजने कृते दशाहं भवति। ॥ ५ ॥

प्रेतं ज्ञातिमज्ञातिं वानुगम्य स्नात्वाग्निं स्पृष्ट्वा घृतं प्राश्नीयात्। आत्मनः पितुर्मातुश्च योनिबन्धूनां च मरणे विज्ञाते सचेलस्नानं करोति। द्वितीये ऽहनि पुनर्दहनप्रभृति तदश्मन्युदकं दत्त्वा दक्षिणाग्रं कूर्चं निधाय तन्नाम्ना प्रेतमावाह्य तैलमञ्जनं स्नानं वासोदकं दत्त्वा पाद्याचमनगन्धपुष्पधूपदीपाक्षताचमनैरभ्यर्च्य सायंप्रातर्बलिं दत्त्वोदकं ददाति।

---

१ स्त्रियश्च La Vi My.

२ Thus B; पूर्ववत् Ed; जननादूर्ध्वं La Vi My.

३ सर्वं La Vi My.

४ Thus Ma and in acc. with this reading Bh; परस्यैवाहोभिरशुचिर्भ॰ La Vi My; परस्यैवाहोभिराशौचशुद्धिर्भ॰ Ed.

५ I have accepted the reading of Ma; त्र्यहं वा। संवहने कृते Ed; त्र्यहनि वा सहने कृते La Vi My.

प्रातर्बलौ हीने सायं द्विगुणं सायं हीने प्रातर्द्विगुणमेवमा दशाहात्करोति। श्वकुक्कुटसूतिकोदक्यान्त्यजैरश्मनि स्पृष्टे पञ्चगव्यैः प्रक्षाल्य बलिं दद्यात्। सप्तमे ऽहनि नवे[1] मृत्पात्रे[1] चितास्थीन्यादाय[2] पुण्यनद्यां समुद्रे वा प्रक्षिपति। अन्तर्दशाहे ऽमावास्या यदि भवेत्तस्यामेव शेषान्बलीन्दत्त्वा बलिकर्म समापयति। द्विचन्द्रदर्शने महान्दोषो भवेत्। दशमे ऽहन्येकदा बलिं दत्त्वाश्मानं विसृजेत्। ॥ ६ ॥

जातदन्तस्य चौडकात्पूर्वं मरणे त्र्यहं भूमौ तूष्णीं बलिनिर्वापणमित्येके[3]। दहनप्रभृत्याहिताग्नेर्मरणप्रभृत्यनाहिताग्नेरेकादशे ऽहन्येकोद्दिष्टं कुर्यात्। एकोद्दिष्टनिमित्तश्राद्धे तन्नाम्ना प्रेतनिमित्तं भुङ्क्ष्वेति ब्राह्मणं वरयित्वा प्रेताय स्वधेति पाणौ तिलोदकं दत्त्वा होमं पिण्डदानं च कृत्वान्नादि सकृत्सकृद्दत्त्वा भोजयेद्द्युतं[4] वा ददातीति केचित्। निमित्तश्राद्धे मासे ऽतीते हीने च प्राजापत्यं चरित्वा प्रायश्चित्तं कृत्वा पूर्ववदेकोद्दिष्टं कुर्यात्। सपिण्डीकरणात्पूर्वं मासि मासि तन्मरणदिने पिण्डं निरुप्यैकं भोजयति। द्वादशे षष्ठे तृतीये वा मासे शुभकार्ये प्राप्ते द्वादशाहे[5] वा[5] सपिण्डीकरणं कुर्यात्। ॥ ७ ॥

---

१ नवमे मृ० La Vi My; नवमृ० Ed.

२ चितायामस्थी० Ma.

३ Thus Bh La Vi My; बलिं निर्वपतीत्येके Ma Ed.

४ ०द्द्युतं La Vi My; ०दुदकं Ed.

५ द्वादशाहे स Vi My.

पूर्वेद्युर्द्वौ विश्वेदेवार्थं त्रीन्पित्रर्थमेकं प्रेतार्थं सपिण्डीकरणश्राद्धे भोक्ष्यतामिति वरयित्वा स्वाहा स्वधेति तेषां करे तिलोदकं दत्त्वा पितृभ्यः स्वधेति पात्रं तिलोदकैः पूरयित्वा पितॄनावाह्य तन्नाम्ना प्रेताय स्वधेत्यन्यत्पात्रं पूरयित्वा प्रेतमावाह्य तथा होमं कृत्वा पिण्डं निरुप्य विश्वेदेवाभ्यां द्विर्द्विर्दत्त्वा पितृभ्यः प्रेताय सकृत्सकृद्दत्त्वा तान्भोजयति। पितृपिण्डैः प्रेतपिण्डं समारोप्य पितृपात्रोदकैः प्रेतपात्रोदकं संयोजयति। सपिण्डीकरणे हीने कृतं शुभकार्यं विनश्यति। तस्मात्प्रायश्चित्तं कृत्वा सपिण्डीकरणं कृत्वा भिन्नेऽहनि विष्णुसूक्तं मिन्द्राकृत्याश्रावितादीन्हुत्वा पुनः शुभकर्म कुर्यात्। अष्टकाहीने तदंशविनाशो भवेद्यत्नेनाष्टकं करोति। यथोक्तजलदानपिण्डनिर्वापब्राह्मणभोजनेषु श्रद्धया कृतेषु सर्वसम्पत्समृद्धिर्वंशविवर्धनं[1] च भवेदिति विज्ञायते। ॥ ८ ॥

गृहस्थस्यौपासने[2] विच्छिन्ने यदि प्राणोत्क्रान्तिर्वृद्धानुज्ञातस्तत्पुत्रः[3] श्रोत्रियागारादग्निमाहृत्य संस्कृतायां भुवि व्याहृतिभिः संस्थाप्योपतिष्ठेत जुष्टो दमूना इत्यथैनं परिसमूह्य परिस्तीर्य पर्युक्ष्याज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा सप्त व्याहृतीर्हुत्वा पुनरपि पूर्ववद्गृहीत्वा पूर्वं देवाः प्राणापानाविति द्वाभ्यां मा त्वा वृक्षौ संबाधिष्टां मा त्वा वृक्षौ संबाधेथामिति

---

१ ०विवर्धनं Bh Vi My ; वर्धनं without वि Ma La Ed.
२ अथ गृह० Ma Ed.
३ वृद्धानुज्ञा० Vi My.

द्वाभ्यामग्ने ऽभ्यावर्तिन्नग्ने अङ्गिर इति द्वाभ्यां पुनरूर्जा सह रय्येति[१] द्वाभ्यामयास्याग्ने ब्राह्मण एकहोतेति द्वाभ्यां क्रमेण चतुर्गृहीतानि हुत्वा पुनश्चतुर्गृहीतं गृहीत्वा महाव्याहृतीश्च[१] जुहुयादेवमग्निमुत्पाद्य[२] पूर्वोक्तेन विधिना दहनं कुर्यात्[३] ।
५ ॥ ९ ॥

## सप्तमः प्रश्नः समाप्तः ॥

## ॥ समाप्तं गृह्यसूत्रम् ॥

---

१ La Vi and My differ considerably ; रय्येति द्वाभ्यां क्रमेण चतुर्गृहीतं गृहीत्वा (these three words om. Vi) अयास्याग्ने ब्राह्मण एकहोतेति महाव्या० ; Ed agrees with Ma (the text accepted by me), omitting only after क्रमेण the words चतुर्गृहीतानि हुत्वा पुनश् ।

२ ०हृतीश्च हुत्वाग्निमुत्पाद्य Ma Ed.

३ After कुर्यात् Ma Bh ins. इति विखनाः प्राह ; moreover the Bh. reads प्राह प्राह indicating the close of this text.

अथ वर्णाश्रमधर्मं । ब्राह्मणक्षत्रियवैश्यशूद्रा मुखबाहूरुपादेषु जाताश्चत्वारो वर्णा । यस्माद्ब्राह्मणो ऽस्य मुखमासीदिति श्रुतिः । पूर्वेषां त्रयाणां निषेकाद्याः संस्कारा विधीयन्ते । तेषां द्विजन्मनां वेदाधिकारस्तस्माद्ब्राह्मणस्याध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाणि[1] षट्कर्माणि भवन्ति । क्षत्रियवैश्ययोर्यजनाध्ययनदानानि । क्षत्रियस्य प्रजापालनदुष्टनिग्रहयुद्धाः[2] । वैश्यस्य पाशुपाल्यकुसीदवाणिज्यानि[3] । शूद्रस्य द्विजन्मनां शुश्रूषा कृषिश्चैव । ब्राह्मणस्याश्रमाश्चत्वारः क्षत्रियस्याद्यास्त्रयो वैश्यस्य[4] द्वावेव[4] । तदाश्रमिणश्चत्वारो ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुरिति ॥ १ ॥

उपनीतो ब्रह्मचारी मेखलोपवीताजिनदण्डधारी स्नात्वा तर्पणं ब्रह्मयज्ञं सायंप्रातः सन्ध्योपासनसमिद्धोमौ च कुर्वन्गुरोः पादावुपसंगृह्य नित्याभिवन्दी व्रतेनाध्ययनं करोति । स्थिते गुरौ स्थेयादुत्थिते पूर्वमुत्थाय व्रजन्तमनुगच्छेदासीने शयाने च नियुक्तो नीचैरन्वासनशयने[5] कुर्यादनुक्तो[5] यत्किञ्चित्कर्म नाचरति । अनुक्तो ऽपि स्वाध्यायनित्यकर्माण्याचरेदुष्णाम्बुस्नानदन्तधावनाञ्जनानुलेपनगन्धपुष्पोपानट्छत्रदिवास्वापरेतः-

---

१ ०ग्रहाः Tri.

२ युद्धानि Tri.

३ ०वाणिज्यं My.

४ वैश्यस्याद्यावेव Ed Tri.

५ शयनं Tri; नीचैरन्यासनशयनं न कुर्याद० My and first hand of Vi, where ०शयनं is changed in ०शयिनं।

स्कन्दस्त्रीदर्शनस्पर्शनमैथुनानि[1] कामक्रोधलोभमोहमदमात्सर्यहिंसादीनि वर्जयित्वा सदा शुश्रूषुर्गुरोः प्रियहितकर्माणि कुर्वीताद्वेषी वाक्चित्तानुकूलः प्रियं[2] सत्यं वदत्यार्तो ऽप्यसत्याप्रियं[3] निन्द्यं नाचक्षीत । मधुमांसमत्स्यरसशुक्ताद्यभोज्यभोजनवर्जी भैक्षाचरणं कृत्वा गुरुणानुज्ञातो भैक्षान्नमश्नीयाद्गुरुवृद्धदीक्षितानामाख्यां[4] न ब्रूयाद्गुर्वभावे तत्पुत्रे च गुरुवत्कर्माचरति । ॥ २ ॥

ब्रह्मचारिणश्चतुर्विधा गायत्रो ब्राह्मः प्राजापत्यो नैष्ठिक इति । गायत्र उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमधीत्या सावित्रव्रतसमाप्तेरत्र[5] व्रतचारी[5] । ब्राह्मः सावित्रव्रतादूर्ध्वमनभिशस्तापतितानां गृहस्थानां गृहेषु भैक्षाचरणं वेदव्रतचरणं च कृत्वा द्वादश समा विंशतिसमा वा गुरुकुले स्थित्वा वेदान्वेदौ वेदं वा सूत्रसहितमध्ययनं कृत्वा गार्हस्थ्यानुसरणं कुर्यात्प्राजापत्यः स्नात्वा नित्यकर्मब्रह्मचर्यशीलो नारायणपरायणो वेदवेदाङ्गार्थान्विचार्य दारसंग्रहणं करोति । प्राजापत्ये त्रिसंवत्सरादूर्ध्वं न तिष्ठेदित्यृषयो वदन्ति । नैष्ठिकः काषायं धातुवस्त्रमजिनं वल्कलं वा परिधाय जटी शिखी

---

१ ०स्वाप० Vi My Bh; ०स्वप्न० Ed Tri ;-- ०मैथुनानि Vi My Bh ; ०मथुन० Ed Tri.

२ Vi My om.

३ Thus Ed Bh ; ०सत्यं प्रियं Vi My ; ०सत्यमप्रियं Tri.

४ भैक्षान्नम० Ed Tri ; भैक्षमन्नम० Vi My ; भिक्षान्नम् Bh.

५ समाप्ते व्रत० My ; समाप्ते त्रव्रत० Vi.

वा मेखली दण्डी सूत्राजिनधारी ब्रह्मचारी शुचिरक्षारलवणाशी यावदात्मनो विप्रयोगस्तावद्गुरुकुले स्थित्वा निवेदितभैक्षभोजी भवति । ॥ ३ ॥

दारान्संगृह्य गृहस्थो ऽपि स्नानादिनियमाचारो नित्यमौपासनं कृत्वा पाकयज्ञयाजी वैश्वदेवहोमान्ते गृहागतं गुरुं स्नातकं च प्रत्युत्थायाभिवन्द्यासनपाद्याचमनानि प्रदाय घृतदधिक्षीरमिश्रं[1] मधुपर्कं च दत्त्वान्नाद्यैर्यथाशक्ति भोजयति । भिक्षून्ब्रह्मचारिणो ऽतिथीन्वेदविदः श्रोत्रियान्पितृव्याचार्यर्त्विङ्मातुलश्वशुरादीनभ्यागतान्बालवृद्धाननाथार्ताध्वश्रान्तांश्च यथार्थं पूजयत्यशक्तो ऽप्यग्रं भिक्षां वा सोदकं दत्त्वा शेषं भुञ्जीत । दयासत्यशौचाचारयुतः[2] स्वाध्यायतर्पणाभ्यामृषीन्यज्ञबलिहोमजलपुष्पाद्यैर्देवान् श्राद्धैः पुत्रैश्च पितॄन्बलिना भूतानन्नाद्यैर्मनुष्यांश्च नित्यमर्चयेदृणत्रयेण[3] मुक्तो ऽनृणो भवति । ॥ ४ ॥

गृहस्थाश्चतुर्विधा । वार्तावृत्तिः शालीनवृत्तिर्यायावरो घोराचारिकश्चेति । वार्तावृत्तिः कृषिगोरक्ष्यवाणिज्योपजीवी । शालीनवृत्तिर्नियमैर्युतः पाकयज्ञैरिष्ट्वाग्नीनाधाय पक्षे पक्षे दर्शपूर्णमासयाजी चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी षट्सु षट्सु मासेषु पशुबन्धयाजी प्रतिसंवत्सरं सोमयाजी च ।

---

१ दधिघृत॰ instead of घृतदधि Tri Bh.

२ ॰युक्तः Ed.

३ Thus Ed Bh; नित्यमर्पये॰ My; नित्यं तर्पये॰ Vi Tri;— ॰त्रयेण Vi Bh; ॰त्रयैर् Ed Tri Bh.

यायावरो हविर्यज्ञैः सोमयज्ञैश्च यजते याजयत्यधीते ऽध्यापयति ददाति प्रतिगृह्णाति षट्कर्मनिरतो नित्यमग्निपरिचरणमतिथिभ्यो ऽभ्यागतेभ्यो ऽन्नाद्यं च कुरुते। घोराचारिको नियमैर्युक्तो यजते न याजयत्यधीते नाध्यापयति ददाति न प्रतिगृह्णात्युञ्छवृत्तिमुपजीवति नारायणपरायणः सायंप्रातरग्निहोत्रं कृत्वा मार्गशीर्षज्येष्ठमासयोरसिधाराव्रतं वनौषधिभिरग्निपरिचरणं करोति। ॥ ५ ॥

गृहस्थः सपत्नीकः पञ्चाग्निभिस्त्रेताग्निभिर्वा गृहाद्वनाश्रमं यास्यन्नाहिताग्निरनाहिताग्निश्चौपासनमरण्यामारोप्य गृहे मथित्वा श्रामणकीयविधानेनाधायाघारं कृत्वा श्रामणकाग्निमादाय तृतीयमाश्रमं गच्छेत्पूर्ववदग्न्यालयप्रोक्षणोल्लेखनादि कर्म कुर्यात्। तृतीयामपि[1] वेदिं परिमृज्य षडङ्गुलाग्रैर्दर्भैर्ग्रथिते[2] ऽधस्त्रिधा[2] कृतं रज्जुवन्मूले बद्धं[3] षट्त्रिंशदङ्गुलप्रमाणं परिस्तरणकूर्चं कृत्वा मध्यवेद्यां परिस्तृणाति। श्रामणकं श्रामणकयज्ञं यज्ञदैवतविश्वान्देवानित्यन्तमावाह्याज्यं निरुप्य श्रामणकाय स्वाहा श्रामणकयज्ञाय स्वाहा यज्ञदैवतविश्वेभ्यो देवेभ्यः स्वाहेत्यन्तं कृत्वा चरुं जुहुयादित्याघारविशेषः[4]। श्रामणकाग्नेश्चोर्ध्ववेदिर्द्वात्रिंशदङ्गुल्यायता चतुरङ्गुलिविस्तारो-

---

१ तृतीयम॰ Bh Vi My.
२ ग्रथितमध॰ Vi My.
३ Thus Ed My; बन्धं Tri Vi; बन्धं कृत्वा Bh.
४ Thus Ed and Bh; आधानविशेषः My Tri; आधाने वि॰ Vi.

न्नता । मध्यमा तत्परिगता पञ्चाङ्गुलिविस्तारा[१] चतुरङ्गुलो-त्सेधाधस्तादूर्ध्ववेदिविस्तारोन्नता तृतीया वेदिर्द्व्यादशाङ्गुलं मध्ये निम्नं त्रिवेदिसहितं कुण्डं कृत्वाधाय वनस्थो नित्यमौपासनवत्सायंप्रातराहुतीर्हुत्वा महाव्याहृतिभिः श्रामणकाग्निं जुहुयादपत्नीको दारैरग्निभिर्विना वनं गच्छेत् । ॥ ६ ॥

वानप्रस्थाः सपत्नीका अपत्नीकाश्चेति । सपत्नीकाश्चतुर्विधा । औदुम्बरो वैरिञ्चो वालखिल्यः फेनपश्चेति । औदुम्बरो ऽकृष्टफलावाप्त्यौषधिभोजी[२] मूलफलाशी वा लवणहिङ्गुलशुनमधुमत्स्यमांसपूत्यन्नधान्याम्लपरस्पर्शनपरपाकवर्जी[३] देवर्षिपितृमनुष्यपूजी वनचरो ग्रामबहिष्कृतः सायंप्रातरग्निहोत्रं हुत्वा श्रामणकाग्निहोमं वैश्वदेवहोमं च कुर्वंस्तपः समाचरति । श्रामणकाग्निमेकमेवाधाय जुहोतीत्येके । वैरिञ्चः प्रातर्यां दिशं प्रेक्षते तां दिशं गत्वा तत्र प्रियङ्गुयवश्यामाकनीवारादिभिर्लब्धैः स्वकीयानतिथींश्च पोषयित्वाग्निहोत्रश्रामणकवैश्वदेवहोमी नारायणपरायणस्तपःशीलो भवति । वालखिल्यो जटाधरश्चीरवल्कलवसनो ऽर्काग्निः कार्त्तिक्यां पौर्णमास्यां पुष्कलं भुक्तमुत्सृज्यान्यथा शेषान्मासानुपजीव्य तपः कुर्यात् । अस्य सूर्य एवाग्निर्भवतीत्यामनन्ति । फेनप उद्दण्डक उन्मत्तको

---

१ Some Mss. चङ्गुलि, others अङ्गल ।

२ प्युत्कृष्टफला॰ Vi My ; व्युत्कृ॰ Tri.

३ Uncertain ; ॰पूत्यन्यधान्या॰ Vi My ; ॰पूत्यन्न(धान्य)ा Ed ; ॰पू(त्य ? नधा)न्या Tri ; Bh : पूत्यन्नं दुर्गन्धान्नम् । अन्यदाम्ललवणादि परस्परपाकं वर्जयति पाकवर्जी भवेत् ; ॰पराकवर्जी Ed, परवाग्वर्जी Tri.

निरोधकः शीर्णपतितपत्राहारी चान्द्रायणव्रतं चरन्पृथिवीशायी नारायणं ध्यायन्मोक्षमेव प्रार्थयते। ॥ ७ ॥

अपत्नीका बहुविधाः। कालाग्निका[1] उद्दण्डसंवृत्ता अश्मकुट्टा उदग्रफलिनो दन्तोलूखलिका उञ्छवृत्तिकाः संदर्शनवृत्तिकाः[2] कपोतवृत्तिका मृगचारिका हस्तादायिनः शैलफलकादिनो[3] ऽर्कदग्धाशिनो बैल्वाशिनः[4] कुसुमाशिनः पाण्डुपत्राशिनः कालान्तरभोजिन एककालिकाश्चतुष्कालिकाः कण्टकशायिनो वीरासनशायिनः पञ्चाग्निमध्यशायिनो धूमाशिनः पाषाणशायिनो ऽप्स्ववगाहिन उदकुम्भवासिनो मौनिनश्चावाक्शिरसः सूर्यप्रतिमुखा ऊर्ध्वबाहुका एकपादस्थिताश्चेति विविधाचारा भवन्तीति विज्ञायते। ॥ ८ ॥

अथ भिक्षुका मोक्षार्थिनः कुटीचका बहूदका हंसाः परमहंसाश्चेति चतुर्विधा भवन्ति। तत्र कुटीचका गौतमभारद्वाजयाज्ञवल्क्यहारीतप्रभृतीनामाश्रमेष्वष्टौ ग्रासांश्चरन्तो योगमार्गतत्त्वज्ञा मोक्षमेव प्रार्थयन्ते। बहूदकास्त्रिदण्डकमण्डलुकाषायधातुवस्त्रग्रहणवेषधारिणो ब्रह्मर्षिगृहेषु चान्येषु[5] साधुवृत्तेषु मांसलवणपर्युषितान्नं वर्जयन्तः[6] सप्तागारेषु भैक्षं कृत्वा

---

१ कालसीका Ed; कालश्निका Tri; कालसिका Vi My; कालाग्निखाः Bh
२ Thus Vi My Bh; सन्दशन॰ Tri; संदंशन॰ Ed.
३ ॰खादिनो Ed.
४ बिल्वा॰ Ed Bh.
५ Thus Vi My Bh; Tri Ed om. चान्ये
६ वर्जयित्वा Ed; वर्जयेत् Vi My.

मोचमेव प्रार्थयन्ते । हंसा नाम ग्रामे चैकरात्रं नगरे पञ्चरात्रं वसन्तस्तदुपरि न वसन्तो गोमूत्रगोमयाहारिणो वा[1] मासोपवासिनो वा[2] नित्यचान्द्रायणव्रतिनो नित्यमुत्थानमेव प्रार्थयन्ते । परमहंसा नाम वृचैकमूले शून्यागारे श्मशाने वा वासिनः साम्बरा दिगम्बरा वा । न तेषां धर्माधर्मौ सत्यानृते शुद्ध्यशुद्ध्यादि द्वैतं[3] । सर्वसमाः सर्वात्मानः[4] समलोष्टकाञ्चनाः[5] सर्ववर्णेषु भैचाचरणं कुर्वन्ति । ब्राह्मणानां चातुराश्रम्यं चत्रियाणां त्र्याश्रम्यं वैश्यानां द्व्याश्रम्यं विहितं । तत्फलं हि सकामं निष्कामं चेति द्विविधं भवति । सकामं नामेह[6] संसारे ऽभिवृद्धिं ज्ञात्वा पुत्रलाभाद्यभिकाङ्क्षणमन्यत्स्वर्गादिफलकाङ्क्षणं वा । निष्कामं नाम किञ्चिदनभिकाङ्क्ष्य यथाविहितानुष्ठानमिति । तत्र निष्कामं[7] द्विविधं[8] भवति प्रवृत्तिर्निवृत्तिश्चेति । प्रवृत्तिर्नाम संसारमनादृत्य मद्ध्यज्ञानं समाश्रित्य प्राणायामासनप्रत्याहारधारणायुक्तो[9] वायुजयं कृत्वाणिमाद्यैश्वर्यप्रापणं[10] । तत्पुनरपि तपःचयाज्जन्मप्रापकत्वाद्व्याधि-

---

१ Tri om.

२ Vi My om.

३ द्वन्द्वयुतं instead of द्वैतं Vi My.

४ ०त्मनः Vi My.

५ समलोष्टाश्मकाञ्चनाः Vi My.

६ इह given by Ed Bh only.

७ तन्निष्कामं Ed Tri.

८ द्विधा Vi Bh.

९ ०धारणाध्यानयुक्तो Ed only.

१० ०णिमाद्यष्टैश्वर्य० Ed only.

बाहुल्याच्च[1] नाद्रियन्ते परमर्षयो। निवृत्तिर्नाम लोकानामनित्यत्वं ज्ञात्वा परमात्मनो ऽन्यन्न किञ्चिदस्तीति संसारमनादृत्य छित्त्वा भार्यामयं पाशं जितेन्द्रियो भूत्वा शरीरं विहाय क्षेत्रज्ञपरमात्मनोर्योगं कृत्वातीन्द्रियं[2] सर्वजगद्बीजमशेषविशेषं नित्यानन्दममृतरसपानवत्सर्वदा[3] तृप्तिकरं परं ज्योतिः प्रवेशकमिति[4] विज्ञायते। ॥ ९ ॥

निवृत्त्याचारभेदाद्धि योगिनस्त्रिविधा भवन्ति सारङ्गा एकार्ष्या विसरगाश्चेति। अनिरोधका निरोधका मार्गगा विमार्गगाश्चेति चतुर्विधा सारङ्गा। दूरगा अदूरगा भ्रूमध्यगा असंभक्ताः संभक्ताश्चेत्येकार्ष्याः पञ्चधा भवन्ति। न सङ्ख्यावन्तो विसरगास्तत्र सारङ्गाः सारं क्षेत्रज्ञं गच्छन्तीति सारङ्गास्तेष्वनिरोधका अहं विष्णुरिति ध्यात्वा ये चरन्ति तेषां प्राणायामादयो न सन्ति। ये तु निरोधकास्तेषां प्राणायामप्रत्याहारधारणादयः षोडश कलाः सन्ति। ये मार्गगास्तेषां षडेव प्राणायामादयो। ये विमार्गगास्तेषां [5]यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयश्चेत्यष्टाङ्गान्कल्पयन्तो ध्येयमप्यन्यथा कुर्वन्ति। ॥ १० ॥

---

१ तपःक्षयजन्म° Tri; तत्क्षपयजन्म° Vi My.
२ ज्ञात्वा यदतीन्द्रियं Tri; कृत्वा यदतीन्द्रियं Vi My.
३ नित्यानन्दामृत° Vi My.
४ ज्योतिस्तत्प्रवे° Tri Vi My.
५ Only the Bh. as given in the text. Vi My om. यम; नियमयमा° Ed Tri.

अथैकार्षा। एक एवर्षिर्येषां त एकार्षास्तेषु ये दूरगास्तेषामयं मार्गः। पिङ्गलया नाडिकयादित्यमण्डलमनुप्रविश्य तत्रस्थेन[1] पुरुषेण संयुज्य ततश्चन्द्रमण्डलं तत्रस्थेन पुरुषेण ततो विद्युतं तत्रस्थेन पुरुषेण पुनः क्रमेण वैकुण्ठसायुज्यं यन्ति। येऽदूरगास्तेषामयं धर्मः। क्षेत्रज्ञपरमात्मनोर्योगं क्षेत्रज्ञद्वारेण[2] कारयित्वा तत्रैव समस्तविनाशं ध्यात्वाकाशवत्सत्तामात्रो ऽहमिति ध्यायन्ति। भ्रूमध्यगाः क्षेत्रज्ञपरमात्मनोर्योगे सत्त्वरूपाग्निद्वारेण भ्रूमध्यं नीत्वा पञ्चभ्यो ऽङ्गुष्ठादिभ्यः स्थानेभ्य आकर्षणं पुनः पिङ्गलाद्वारेण[3] निष्क्रमणं[4] प्रलयान्तं क्षेत्रज्ञयोगान्तं वा[5] कुर्वन्ति। असंभक्ता नाम मनसा ध्यानं कुर्वन्ति। तत्प्रतिपादनागमं श्रोत्रेण शृण्वन्ति। चक्षुषा देवताकारं[6] पश्यन्ति। घ्राणेन गन्धमनुभवन्ति। पाणिना देवतां[7] नमस्कुर्वन्ति। संभक्ता नाम ब्रह्मणः सर्वव्यापकत्वाद्युक्तमयुक्तं यो ऽसौ परमात्मा तस्य व्याप्याकाशवत्तिष्ठति। तस्माद्ब्रह्मणो ऽन्यन्न[8] कुत्रचिदात्मानं प्रतिपद्यते ऽसौ। भ्रूमध्यगतस्यापि संशयान्निष्प्रमाणमेवेत्युक्तं। तस्माद्ब्रह्मव्यति-

१ Thus Vi My; तत्रस्थितेन Bh; तत्रत्येन Ed Tri.
२ संयोगं ins. Vi My Tri.
३ पिङ्गलया द्वा० Tri Vi; ०लाया द्वा० My; पिङ्गलद्वारेण Bh.
४ Thus Vi My Bh; निष्क्राम० Ed Tri.
५ वा belongs acc. to the Bh to the text; om. Tri Vi My; च Ed.
६ Thus Bh only; देवतागारं all the other sources.
७ Thus Vi My Tri; ०ता Ed.
८ Or write ऽन्यं न?

रिक्तमन्यन्नोपपद्यते। विविधस्मरणाद्विविधदर्शनात्कुपथगामित्वाद्विसरगाः। पुरा प्रजापतिरुपदेशगूहनार्थं विसरगपक्षं दृष्टवान्। तं दृष्ट्वा मुनयोऽपि मोहं जग्मुः किं पुनर्मनुष्याः। विसरगपशूनामहंकारयुक्तानां जन्मान्तरेषु मुक्तिर्नास्मिञ्जन्मनि। तस्माद्विसरगपक्षो नानुष्ठेयो। केचिद्विसरगाः[1] कायक्लेशात्केचिन्मन्त्रजपात्केचिद्येन[1] केनचिद्ध्यानेन केचिद्येन केनचिदक्षरेण केचिद्वायुजयादन्ये परमात्मना क्षेत्रजं संयोज्य ध्यायन्त्येते[2] परमात्मसंयोगमेव नेच्छन्ति। हृदिस्थ[3] एव पुरुष इति वदन्ति। केचिन्न किञ्चिद्ध्यानमिति यथोक्तानुष्ठानं योगमिति ज्ञात्वा मुक्तिमिच्छन्ति। तेषां विसरगपशूनां जन्मान्तरेषु मुक्तिर्नास्मिञ्जन्मनि। तस्मिन्नेव जन्मनि मोक्षकाङ्क्षिणा विसरगपक्षो नानुष्ठेयः। सगुणे ब्रह्मणि बुद्धिं निवेश्य पश्चान्निर्गुणं ब्रह्माश्रित्य[4] यत्नं कुर्यादिति[4] विज्ञायते। ॥ ११ ॥

## गृह्येऽष्टमो धर्मे प्रथमः प्रश्नः समाप्तः ॥

---

१ Thus Ed Bh; विसरगाः केचित्काय० the other sources; in either case one केचित् seems to be superfluous.

२ Thus Ed Bh (which, however, reads एके instead of एते); एव instead of एते the other sources.

३ Before हृदि० Ed ins. केचित् and probably also Bh.

४ I have accepted the reading of Vi My; ब्रह्माश्रित्य मोक्षे नित्यं यत्नं कु० Ed; ब्रह्माश्रये यत्नं कु० Tri.

अथ वनस्थस्य श्रामणकविधानं[1] । गृहस्थः सोमयाजी पुत्रं पौत्रं च दृष्ट्वा तत्पुत्रादीन्गृहे संस्थाप्य मौण्ड्यं कृत्वा प्राजापत्यं कृच्छ्रं चरेत् । वसन्ते शुक्लपक्षे पुण्यर्क्षे पत्न्या सार्धं वनाश्रमं याति । पूर्वस्मिन्दिवसे कृतस्नानः संकल्प्य कुशोदकं पीत्वोपवासं कुर्यादौपासनहोमं कृत्वाग्निमयं ते योनिरित्यरण्यामारोपयेद्दर्शपूर्णमासविधानेन दर्भादीन्संगृह्य पूर्ववत्परिस्तरणकूर्चान्परिधीन्समिधो[2] वेणुदण्डोपवीतकमण्डलुवल्कलादीन्संभरति । पूर्वोक्तविधिनाग्निकुण्डं कुर्यादपरस्मिन्दिवसे वैश्वानरसूक्तेनाग्निं मथित्वा प्रज्वाल्याग्न आयाह्युपावरोहेत्यग्निं निधाय पूर्ववच्छ्रामणकाग्न्याघारं जुहोति । प्रणम्याग्निं परिषिच्याग्ने प्रायश्चित्ते त्वमिति पञ्चप्रायश्चित्तं कृत्वापोहिरण्यपवमानैरात्मानं प्रोक्ष्य ब्रह्मदैवत्यं वैष्णवं पञ्चवारुणं च प्रधानान्याहुत्यन्तं यजेत्[3] ॥ १ ॥

अग्नेः प्रतीच्यां द्वौ कुशौ पूर्वाग्रौ न्यस्योर्ध्वे ऽश्मानं निधाय तत्सवितुर्वरेण्यमिति दक्षिणपादाङ्गुष्ठाग्रेणाश्मानमधितिष्ठेत्तेजोवत्सव इति[4] वल्कलमजिनं चीरं वा परिधाय पूर्ववन्मेखलादींस्त्रीण्युपवीतान्युत्तरीयं कृष्णाजिनं चाददात्याचम्य[5]

---

१ Thus Ed and Bh; श्रामणकं the other sources.

२ पूर्ववत्कूर्चान्कृत्वा परिधी॰ Vi My.

३ यजेत Ed Tri.

४ Reading of the pratika uncertain (cp. II. 14 : 32. 11); तेजोवत्सव इति Tri Bh; तेजोवत्स्याव: सवितुरिति Ed; तेजोवत्स्याव इति My; ते यजोवत्स्याव इति Vi.

५ चाददात्या॰ Ed; चददात्या॰ the other sources.

स्वस्ति देवेत्यग्निं प्रदक्षिणं[1] प्रणामं च कृत्वासीत[1]। शं नो देवीरिति स्वमूर्ध्नि प्रोक्ष्य जयानभ्यातानान्राष्ट्रभृतो व्याहृतीश्च हुत्वाज्यशेषं प्राणायामेन प्राश्नीयाद्योगे योग इति द्विराचम्य शतमिन्नु शरद इति प्रणाममागन्त्रा समगन्महीति प्रदक्षिणं चादित्यस्य कुर्वीत। राष्ट्रभृदसीत्यूर्ध्वाग्रं कूर्चं गृह्णीयात्। ओं भूस्तत्सवितुरों भुवो भर्गो देवस्यों सुवर्धियो यो न इति पच्छो व्यस्तामों भूर्भुवस्तत्सवितुरों सुवर्धियो यो न इत्यर्धर्चामों भूर्भुवः सुवस्तत्सवितुरिति समस्तां च सावित्रीं जप्त्वा वनाश्रमं प्रविश्य ब्रह्मचर्यव्रतं संकल्पयेत्। ॥ २ ॥

तत्पत्नी च तथा ब्रह्मचारिणी स्यात्। स्वयमेवाग्निं प्रदक्षिणीकृत्याज्येन प्राजापत्यं धातादीन्मिन्दाहुती विच्छिन्नमैन्द्रं वैश्वदेवं वैष्णवं ब्राह्मं विष्णोर्नुकादीन्प्राजापत्यसूक्तं तद्व्रतबन्धं च पुनः प्रधानान्हुत्वा प्राजापत्यव्रतं बध्नाति। स्थित्वा देवस्य त्वा यो मे दण्ड इति द्वाभ्यां पञ्चसप्तनवान्यतमैः पर्वभिर्युक्तं केशान्तायतं वाप्यवक्रं वैणवं द्विदण्डमाददाति[2]। येन देवा इति कमण्डलुमृद्ग्रहिण्यौ पूर्ववदुपानट्छत्त्रे च गृह्णात्यग्नीन्गार्हपत्यादींश्चोज्ज्वाल्याग्निहोत्रं हुत्वाहवनीये प्राजापत्यं विष्णुसूक्तं च सर्वत्राग्नये स्वाहा सोमाय स्वाहा विष्णवे स्वाहेति हुत्वाग्नीनरण्यामारोपयति। वने[3] ऽद्रौ विविक्ते नदीतीरे[3]

१ Vi only: प्रदक्षिणीकृत्य प्रणम्यासीत; च om. Tri.
२ Thus Ed Tri My Vi; आदधाति Bh.
३ वने वाद्रौ नदीतीरे विविक्ते Vi My.

वनाश्रमं प्रकल्प्य यथोक्तमग्निकुण्डानि कुर्यात्पत्न्या सहाग्नीनादाय पात्रादिसंभारयुक्तो वनाश्रमं समाश्रयति। ॥ ३ ॥

अग्न्यायतने प्रोक्ष्य खनित्वा लेखाः षडुल्लिख्य[1] सुवर्णशकलं व्रीहींश्च निधाय श्रामणकाग्निं निदध्यात्। वन्यानेव पार्थिवान्वानस्पत्यान्कुलीरोद्धूताञ्छणान्पुराणान्कुशदर्भानूर्णास्तुकां[2] स्रुचाग्रं सुगन्धितेजनं गुग्गुलुं हिरण्यशकलान्सूर्यकान्तं च संभरति। वानप्रस्थानृत्विजो वृत्वाग्निं[3] मथित्वा गार्हपत्यादींस्त्रेताग्नीन्पञ्चाग्नीन्वाग्न्याधेयक्रमेणाधायाहुती द्वे द्वे हुत्वा नित्यं द्विकालं वन्यैरेव जुहोति। वनाश्रमी मुनिः स्नानशौचस्वाध्यायतपोदानेज्योपवासोपस्थनिग्रहव्रतमौनानीति नियमान्दशैतान्सत्यानृशंस्यार्जवक्षमादमप्रीतिप्रसादमार्दवाहिंसामाधुर्याणीति यमान्दशामूंश्च समाचरति। भक्त्या विष्णुं ध्यायन्नग्निहोत्रश्रामणकाग्निहोमौ द्विकालं नोत्सृजन्ग्राम्याशनं त्यक्त्वा वन्यौषधीः[4] फलं मूलं शाकं वा नित्याशनं संकल्प्य तिरोधा भूरित्याहुत्यापराह्णे[5] स्वयं पत्नी वा हविष्यमास्रावितं पचति। वैश्वदेवान्ते ऽतिथीनभ्यागतान्प्राशयित्वा मितं प्राश्नाति। ॥ ४ ॥

---

१ षड्विलिख्य Vi My.

२ Thus Ed Bh; चोर्णान् instead of शणान् the other sources; ऊर्षकां instead of ऊर्णस्तुकां Vi My.

३ वरयित्वा instead of वृत्वा Vi My.

४ वन्यौषधीभिः Ed Bh.

५ Thus Ed Tri; ०भूरित्याहुत्या० Vi My; इति व्याहृतिभिः Bh.

रात्रौ नाश्नीयादधस्ताद्दर्भांस्तृणानि पर्णानि वास्तीर्य सुव्रतः सुव्रतां पत्नीं विनैकः शयीत । सास्य शुश्रूषां करोत्येनां नोपगच्छेत् । मातृवन्निष्कामः प्रेत्येतोर्ध्वरेता जितेन्द्रियो । दर्शपूर्णमासौ चातुर्मास्यं नक्षत्रेष्टिमाग्रयणेष्टिं च वन्यौषधीभिः पूर्ववद्यजेदनुक्रमान्मूलैः[1] फलैः पत्रैः पुष्पैर्वा तत्तत्कालेन पक्वैः स्वयमेव संशीर्णैः प्राणं प्रवर्तयन्नुत्तरोत्तरेऽप्यधिकं तपःसंयोगं फलादिविशिष्टमाचरेदथवाहिताग्निः सर्वानग्नीनरण्यामारोप्य सर्वैः सवापमन्त्रैः पार्थिवान्वानस्पत्यांश्च सर्वान्समूह्य निर्मन्थ्यैतेन विधिनाग्न्याधेयविधानेन च मन्त्रैः सर्वैः सभ्याग्न्यायतने श्रामणकाग्निमाधायाहरेत्सभ्यस्य भेदः श्रामणकाग्निरित्याहुः । अपत्नीकश्च भिक्षुवदग्नौ[2] होमं[2] हुत्वारण्यादिपात्राणि च प्रक्षिप्य पुत्रे भार्यां निधाय तथाग्नीनात्मन्यारोप्य वल्कलोपवीतादीन्भिक्षापात्रं च संगृह्यानग्निरदारो गत्वा वने निवसेत्तपसां[3] श्रमणमेतन्मूलं[3] तस्मादेतद्विधानमेनमग्निं च श्रामणकमित्याह विखनाः । ॥ ५ ॥

संन्यासक्रमं[4] । सप्तत्यूर्ध्वं वृद्धो ऽनपत्यो विधुरो वा जन्ममृत्युजरादीन्विचिन्त्य योगार्थी यदा स्यात्तदाथवा पुत्रे भार्यां निक्षिप्य परमात्मनि बुद्धिं निवेश्य वनात्संन्यासं कुर्यात् । मुण्डितो विधिना स्नात्वा ग्रामाद्बाह्ये प्राजापत्यं चरित्वा

---

१ ०नुक्रामा० Ed ; ०नुकामा० Tri.

२ भिक्षुवदौपासनं हुत्वा Vi, and thus also My, only ०पासनहोमं हुत्वा।

३ तपसां श्र० Ed ; तपसाश्रम० Bh ; तपसां श्राम० Vi My.

४ ०क्रमः Bh.

पूर्वाह्णे त्रिदण्डं शिक्यं काषायं कमण्डलुमप्पवित्रं मृद्ग्रहणीं भिक्षापात्रं च संभृत्य त्रिवृतं प्राश्योपवासं कृत्वा दिने ऽपरे प्रातः स्नात्वाग्निहोत्रं वैश्वदेवं च हुत्वा वैश्वानरं द्वादशकपालं निर्वपेत् । गार्हपत्याग्नावाज्यं संस्कृत्याहवनीये पूर्णाहुती पुरुषसूक्तं च हुत्वाग्नये सोमाय ध्रुवाय ध्रुवकरणाय परमात्मने नारायणाय स्वाहेति जुहोति । ॥ ६ ॥

स्रुचि स्रुवेण चतुर्गृहीतं गृहीत्वा सर्वाग्निभ्यो स्वाहेति जुहुयादग्निहोत्रहवणीमाहवनीये मृच्छिलामयेभ्यो ऽन्यानि पात्राणि गार्हपत्ये प्रक्षिपति । गृहस्थो ऽनाहिताग्निरौपासने वनस्थश्च श्रामणकाग्नौ होमं कृत्वा पात्राणि प्रक्षिपेत् । पच्छो ऽर्धर्चशो व्यस्तां समस्तां च सावित्रीं जप्त्वा भिक्षाश्रमं[1] प्रविशामीति तं प्रविशत्यन्तर्वेद्यां स्थित्वा गार्हपत्यादीन्या ते अग्ने यज्ञियेति प्रत्येकं त्रिराघ्राय भवतं नः समनसावित्यात्मन्यारोपयेत् । भूर्भुवः सुवः संन्यस्तं मयेति त्रिरुपांशूच्चैश्च प्रेषमुक्त्वा दक्षिणहस्तेन सकृज्जलं पीत्वाचम्य तथैवोक्त्वा त्रिर्जलाञ्जलिं विसृजेन्मेखलां चत्वार्युपवीतान्येकं वोपवीतं कृष्णाजिनमुत्तरीयं च पूर्ववद्ददाति । ॥ ७ ॥

देवस्य त्वा यो मे दण्डः सखा मे गोपायेति त्रिभिस्त्रिदण्डं यदस्य पारे रजस इति शिक्यं येन देवाः पवित्रेणेत्यप्पवित्रं येन देवा ज्योतिषेति कमण्डलुमृद्ग्रहण्यावाददीत[2] ।

---

१ भिक्ष्वाश्रमं Vi My.
२ ०ददाति Tri only.

स्नात्वाघमर्षणसूक्तेनाघमर्षणं कुर्यात्। आचम्य षोडश प्राणायामान्कृत्वा सहस्रं शतं वा सावित्रीं जप्त्वा तथा भिक्षापात्रमलाबु[1] दारवं मृन्मयं वा गृह्णाति। प्रणवाद्यादिभिः[2] पृथक्पृथक्सप्तव्याहृतिभिस्तर्पयामीति देवेभ्यो जले ऽद्भिस्तर्पयित्वाद्याभिस्तुतस्तृभिः स्वधेति पितृभ्यस्तर्पयेत्, उद्वयं तमस इत्यादित्यमुपतिष्ठेत। जलाञ्जलिं विसृज्याभयं सर्वभूतेभ्यो दद्यादध्यात्मरतो यतिर्भिक्षाशी नियमयमांश्च समाचरन्संयतेन्द्रियो ध्यानयोगेन परमात्मानमीक्षेत। ॥ ८ ॥

धर्म्यं सदाचारं। निवीती दक्षिणे कर्णे यज्ञोपवीतं कृत्वोत्कटिकमासीनो ऽहन्युदङ्मुखो रात्रौ दक्षिणामुखस्तृणैरन्तरिते मूत्रपुरीषे[3] विसृजेन्नद्यां गोष्ठे पथि छायायां भस्मन्यप्सु कुशे दर्भे वा नाचरेत्। गोविप्रोदकाग्निवाय्वर्कतारेन्दून्न पश्यन्कुर्यात्। वामहस्तेन लिङ्गं संगृह्योत्थायोदकस्य पार्श्वे तथासीनो ब्रह्मचारी गृहस्थो ऽपि शिश्ने द्विर्हस्तयोश्च द्विर्द्विर्गुदे षट्कृत्वो मृदं दत्त्वोद्धृतैरेव जलैः शौचं कुर्यात्। करं वामं दश कृत्वः करावुभौ च तथा मृदाद्भिः प्रक्षालयेत्[4]। वनस्थस्य भिक्षोश्चैतद्द्विगुणं भवति। रात्रौ यथोक्तार्धं वा। रेतोविसर्गे मूत्रवच्छौचं कर्तव्यं। रेतसस्त्रि-

---

१ ०बुं Tri Bh.

२ Thus all (also Bh) exc. Ed: प्रणवादिभिः, which may, after all, be the correct reading.

३ Thus Vi My; ०पुरीषौ the other sources.

४ प्रक्षाल्य Vi My.

रित्येके । सोपवीती प्राङ्मुख उदङ्मुखो वान्यत्रासित्वा मृदाम्बुना पूर्ववत्पादौ पाणी च प्रक्षाल्याचम्य मन्त्रेणाचामति । ॥ ९ ॥

ब्राह्मणो हृद्गाभिः क्षत्रियः कण्ठगाभिर्वैश्यस्तालुगाभिरद्भिराचामेत् । आत्मानं प्रोक्ष्य प्रत्यर्कमपो विसृज्यार्कं पर्यत्युदकस्याग्नेर्वामपार्श्वे प्राणानायम्य प्रत्येकमोंकारादिसप्तव्याहृतिपूर्वां गायत्रीमन्त्रे सशिरस्कां त्रिर्जपेत् । स प्राणायामस्त्रीनेकं वा प्राणायामं कृत्वा पूतः । शतं दशाष्टौ वा सावित्रीं जप्त्वा[1] सायंप्रातः सन्ध्यामुपास्य नैशिकमाह्निकं चैनो ऽपमृज्यते । द्विजातिः सन्ध्योपासनहीनः शूद्रसमो भवति । ब्रह्मचारी स्वनाम संकीर्त्याभिवादयेदहं भो इति । श्रोत्रे च संस्पृश्य गुरोः पादं दक्षिणं दक्षिणेन पाणिना वामं वामेन व्यत्यस्य जान्वोरापादमुपसंगृह्णन्नानतशीर्षो ऽभिवादयत्यायुष्मान्भव सौम्येत्येनं शंसेदनाशीर्वादी नाभिवन्द्यो । माता पिता गुरुर्विद्वांसश्च प्रत्यहमभिवादनीयाः । ॥ १० ॥

अन्ये बान्धवा विप्रोष्य प्रत्यागत्याभिवन्द्याः । ज्येष्ठो भ्राता पितृव्यो मातुलः श्वशुरश्च पितृवत्पितृष्वसा मातृष्वसा ज्येष्ठभार्या भगिनी ज्येष्ठा च मातृवत्पूजितव्याः[2] । सर्वेषां माता श्रेयसी गुरुश्च श्रेयान् । परस्त्रियं युवतिमस्पृशन्भूमावभि-

---

१ सन्ध्योपासनं कुर्यात् ins. Ed.
२ पूजयितव्याः Tri (correctly !) only.

वादयेद्वन्द्यानां[1] वन्दनादायुर्ज्ञानबलारोग्यशुभानि[2] भवन्ति। यज्ञोपवीतमेखलाजिनदण्डान्यपरेण धृतान्न धारयेदुपाकृत्यानालस्यः शुचिः प्रणवाद्यं वेदमधीयानो ऽमावास्यायां पौर्णमास्यां चतुर्दश्योः प्रतिपदोरष्टम्योश्च नाधीयीत। नित्यजपे होमे चानध्यायो नास्ति। मार्जारनकुलमण्डूकश्वसर्पगर्दभवराहपश्वादिष्वन्तरागतेष्वहोरात्रं सूतकप्रेतकयोराशौचे तावत्कालं तिस्रो ऽष्टकासु गुरौ प्रेते च त्रिरात्रमनध्यायः[3] स्यात्। ॥ ११ ॥

तद्भार्यापुत्रयोः स्वशिष्यस्य चोपरमे मनुष्ययज्ञे श्राद्धभोजने चैकाहमनध्यायः[4] स्यात् आपदार्त्योरप्रायत्ये[5]। वृक्षनौयानशयनेष्वारूढः प्रसारितपादो मूत्रपुरीषरेतोविसर्गे ग्रामे ऽन्तःशवे सत्यभक्ष्यान्नभोजने छर्दने श्मशानदेशे सन्ध्यास्तनिते[6] भूकम्पे दिग्दाहे ऽग्न्युल्कानिपाते रुधिरोपलपांसुवर्षे सूर्येन्दुराहुग्रहणे च तत्तत्काले नाधीयीत। परत्रेह श्रेयस्करो वेदस्तदध्येतव्यो। ऽन्ते विसृज्य प्रणवं ब्रवीति। लौकिकाग्नौ समिधौ हुत्वा भिक्षान्नं मेधाप्रदं शुद्धं मौनी भुञ्जीत। पौषे

---

१ युवती॰ Ed Vi My.

२ Before ॰ज्ञान॰ Vi My Tri ins. श्री।

३ ॰ध्यायः Vi Bh; ॰ध्यायं My Tri Ed.

४ Thus Vi; ॰ध्यायं My Ed Tri.

५ Thus Ed; आपदानप्रायत्यः Tri; अपदात्योरप्रत्ययो Vi My; Bh reads अप्रयतत्वे।

६ Thus Bh only; all the other sources सन्ध्यास्तमिते (!).

माघे वा मासे ग्रामाद्बहिर्जलान्ते पूर्ववद्धुतविसर्गहोमं हुत्वा स्वाध्यायमुत्सृज्य पक्षे शुक्ले वेदं कृष्णे वेदाङ्गं च यावदन्तं समधीत्य[1] गुरोर्दक्षिणां दत्त्वा समावर्ती[2] स्यात्। ॥ १२ ॥

मध्याह्ने शुद्धे[3] जले[3] मृदाद्भिः पादौ हस्तौ च धावयित्वाचम्याङ्गानि संशोध्यापः पुनन्त्विति जले निमज्ज्याचान्तो वैष्णवैर्मन्त्रैर्विष्णुं हिरण्यशृङ्गमिति वरुणं च प्रणम्याघमर्षणसूक्तेनाघमर्षणं कृत्वेदमापः शिवा इति स्नायादाश्रमिणस्त्वारः स्नानं नित्यमेवं पूर्वोक्तेन विधिना काम्यं नैमित्तिकं च कुर्वन्ति। धौतवस्त्रेणाच्छाद्य पूर्ववदाचम्य प्रोक्ष्यासीनस्तिष्ठन्वा कृतप्राणायामः सावित्रीं जप्त्वादित्यमुपतिष्ठेत। दक्षिणपाणिना तीर्थेन ब्राह्मेण भूपत्यादीन्दैवेन नारायणादीन्कृष्यादीनार्षेण विश्वामित्रादीन्पैतृकेण पित्रादीनद्भिस्तर्पयित्वा ब्रह्मयज्ञं करिष्यन्नित्यमिषे त्वोर्जे त्वेति यथाकामं[4] यजुःसंहितामाद्यांस्त्रीननुवाकान्स्वाध्यायं कुर्वीत। नैमित्तिकमृतं च सत्यं चेत्यादिसूक्तानि चतुर्वेदादिमन्त्रान्वाप्यधीयीत। सर्वयज्ञानामादिर्ब्रह्मयज्ञः। तस्मादुपनयनप्रभृत्येव द्विजैः कर्तव्यो। नद्यां तीर्थे देवखाते सरसि तटाके वा सामान्ये स्नानं कुर्यात्। ॥ १३ ॥

---

१ सम् om. Ed Bh.
२ समावृत्तो Tri; समावृत्ती Vi; ०वृत्ति My.
३ जले शुद्धे Tri Ed.
४ यथाक्रमं Vi My.

परस्योदके[1] मृत्पिण्डान्पञ्चोद्धृत्य स्नायात्कूपे तत्तीरे त्रिः कुम्भेनाभिषिञ्चेदुच्छिष्टो नग्नो वा न स्नायात्तथा न[2] शयीतातुरो[2] ऽप्सु नावगाहेतातुरस्य[3] स्नाने नैमित्तिके दश कृत्वो द्वादश कृत्वो वा तमनातुरो जले ऽवगाह्याचम्य[4] स्पृशेत्ततः स पूतो भवति । द्विकालं होमान्ते पादौ प्रक्षाल्याचम्यासने प्राङ्मुखः प्रत्यङ्मुखो वा[5]स्थित्वा[5] चतुरश्रोपलिप्ते मण्डले शुद्धं पात्रं न्यस्येत्तत्रान्नं प्रक्षिप्य तत्पूजयति । द्वौ पादावेकं वा भूमौ निधाय प्रसन्न ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति सत्यं त्वर्तेन परिषिञ्चामीति प्रातरमृतोपस्तरणमसीत्याधावं पीत्वा विधिना प्राणाहुतीर्हुत्वान्नमनिन्दन्नश्नाति । भुक्त्वामृतापिधानमसीत्यपः पीत्वाचम्याचामेदेकवासाः शयानस्तिष्ठन्स्नानजपहोमी शुष्कपाद उदङ्मुखो वा नाश्नाति । भिन्नपात्रे[6] ऽन्नं[6] पर्युषितं शयनासनोत्सङ्गस्थं वा न भुञ्जीताञ्जलिनापो न पिबेदुच्छिष्टाशुच्याशौचिपतितैः स्पृष्टं सूतकप्रेतके चान्नं[7] नाश्नीयात् ॥ १४ ॥

---

१ Thus Vi My Tri; पारकस्योदके Ed; Bh seems to presuppose पारक्य उदके।

२ Thus Ed Tri Bh; नाधीयीत Vi My.

३ ०गाहेत आतुरस्य Vi; ०गाहेचातु० My; ०गाहेत् all the other sources.

४ अवगाह्य twice Vi My.

५ Thus Vi My Bh; वास्थित्वा Tri and Ed where a var. r. वासयित्वा is mentioned.

६ भिन्नपात्रेणान्नं Tri Vi My.

७ Ed Tri ins. च।

तिलसक्तुदधिलाजं च रात्रावभक्ष्यमन्नं पर्युषितमाज्येन दध्ना वा युक्तं भोज्यं। क्रिमिकेशकीटयुतं[1] गवाघ्रातं पक्षिजग्धं च भस्माद्भिः प्रोक्षितं शुद्धं। श्वकाकाद्युपहते बह्वन्ने तस्मिन्पुरुषाशनमात्रं तत्रैवोद्धृत्य व्यपोह्य पवमानः सुवर्जन इति भस्मजलैः प्रोक्ष्य दर्भोल्कया स्पर्शयित्वा गृह्णीयात्। प्रसूते ऽन्तर्दशाहे गोक्षीरं सदैकशफोष्ट्रस्त्रीणां पयश्च पलाण्डुकवकलशुनगृञ्जनविड्जमनुक्तं[2] मत्स्यमांसं च वर्जनीयं। यज्ञशिष्टं मांसं भक्षणीयमुदक्यास्पृष्टं शूद्रानुलोमैः स्पृष्टं तेषामन्नं च वर्जयेत्। स्वधर्मानुवर्तिनां शूद्रानुलोमानामामं क्षुधितस्य संग्राह्यं। सर्वेषां प्रतिलोमान्तरालव्रात्यानामामं पक्वं च क्षुधितो ऽपि यत्नान्न गृह्णीयात्। तैः[3] स्पृष्टिसंमिश्रं[3] परपक्वं[4] च संत्यजति। नित्यं श्रुतिस्मृत्युदितं कर्म कुर्वन्मनोवाक्कायकर्मभिः शनैर्धर्मं समाचरति। ॥ १५ ॥

**गृह्ये नवमो धर्मे द्वितीयः प्रश्नः समाप्तः ॥**

---

१ क्षमि० Ed Tri.

२ Reading uncertain. Vi : पलंडुकवकलशुनक्षच्छनविड्जमवंधं अनुक्तं; My : पलाण्डुकवकालशुनक्षसुनविड्द्मवन्धमनुक्तं; Ed : पलण्डुं कवकं लशुनं गृञ्जनं विड्जमनुक्तं; Tri : पलाण्डुं कलञ्जं लशुनं गृञ्जनं विट् (जं ? सं) वन्धमनुक्तं; Bh : पलाण्डु सुकंदुकम्। कनकं रक्तवर्णं लशुनं श्वेतवर्णमेते लशुनविशेषाः सर्वे वर्जनीयाः। विड्जं विड्वराहमनुक्तं शास्त्रानुक्तं। There is neither in Ed nor in Bh any trace of संबन्ध।

३ तैः स्पृष्टं सं० Ed only.

४ Ed om. पर० before पक्वं।

गृहस्थाश्रमी द्वे यज्ञोपवीते वैणवं दण्डं कमण्डलुं च धारयेत्। स्नात्वा सभार्यो गृह्याग्नौ गार्ह्याणि कर्माणि श्रौताग्निषु श्रौतानि कुर्यात्सायं च होमान्ते ऽतिथीनभ्यागतान्प्राशयित्वा मितं प्राश्य पत्न्या शयीतार्द्रपादः प्रत्यगुत्तरशिराश्च न स्वपित्यृतुरात्रिषु[1] स्वभार्यामुपगच्छेदादौ चिरात्रमृतुमतीगमनसहासनशयनानि वर्जयेत्परदारान्न संगच्छेत्परदारगमनादायुः श्रीर्ब्रह्मवर्चसं विनश्यति। भार्यया सह नाश्नात्यश्नन्तीं[2] तां जृम्भमाणां नग्नां च नावलोकयेत्। असत्यवादं वर्जयत्यसत्यात्परं पापं सत्यात्परो धर्मश्च नास्ति। सर्वप्राणिहितो ऽद्रोहेणैव जीवेच्छुद्धार्थवान्कुसूलधान्यः कुम्भीधान्यो ऽश्वस्तनिको वा स्यात्। द्विजातिः पतितान्त्यजातान्न स्पृशेदुदये ऽस्तमये च सूर्यं नेक्षेत। देवगुरुविप्रघृतक्षीरदधिमृत्तोयसमिद्दर्भाग्निवनस्पतीन्प्रदक्षिणं गच्छेत्॥ १॥

स्नातकराजगुरुश्रेष्ठरोगिभारभृद्दन्तर्वत्नीनां पन्था देयो। वातार्करश्मिभिः पन्थानः शुध्यन्ति। परस्यासनशयनान्यदत्तानि नोपयुञ्जीतादत्तेषूपयुक्तेषु[3] स्वपुण्यचतुर्थांशो जहाति। अन्योपयुक्तानि वस्त्रमाल्योपानट्छत्त्राणि नैव धारयेदग्नौ पादं न तापयेन्नैनं मुखेन धमेन्न पादेन स्पृशेदधः[4] पादतो न कुर्यादग्नावग्निं[4] जलं वा देवालये ऽग्नौ जले च मूत्रपुरीष-

---

१ स्वपति instead of स्वपिति Vi My.
२ Only Tri has correctly ॰श्नतीं।
३ Thus Ed My; ॰ञ्जीत दत्तेषू॰ Vi Tri.
४ Thus Ed only; ॰दधःपा(दो? दे) न कुर्या॰ Tri; अधःपादो न कु॰ Vi My.

पूयशोणितरेतःश्लेष्मोच्छिष्टाङ्गनिष्पेषान्[1] प्रक्षिपेत्। नग्नां परस्त्रियं विण्मूत्रे च न पश्येदुच्छिष्टो देवार्कचन्द्रग्रहर्क्षतारा[2] नेक्षेत। देवगुरुस्नातकदीक्षितराजगोश्रेष्ठानां छायां नाक्रामति। इन्द्रधनुः परस्मै न दर्शयेन्न वदेत्स्वपन्तं नावबोधयेदेको[3] ऽध्वानं न गच्छेत्। परक्षेत्रे चरन्तीं गां धयन्तं वत्सं च न वारयेन्नैवाचक्षीत। जीर्णमलवासा न स्यात्॥२॥

सद्भिः क्रीडां प्रेतधूमं बालातापं च वर्जयेत्केशरोमतुषाङ्गारकपालास्थिविण्मूत्रपूयशोणितरेतःश्लेष्मोच्छिष्टान्नाधितिष्ठेत्। अमेध्यलिप्ते ऽङ्गे यावत्तल्लेपगन्धमनःशङ्का[4] न स्यात्तावन्मृत्तोयैः[4] शोधयेत्। पतितान्त्यजमूर्खाधार्मिकवैरिभिः सार्धं न वसेदुच्छिष्टो ऽशुचिर्वा देवगोविप्राग्नीन्न स्पृशेत्। देवान्वेदान्राजगुरुमातापितॄन्विद्वद्ब्राह्मणान्नावमन्येत[5] न निन्देद्वमन्ता निन्दकस्य विनश्यति। सर्वभूतकुत्सां ताडनं च न कुर्वीत। गुरुणा मातापितृभ्यां तत्पित्राद्यैर्भ्रातृपितृभ्रातृमातुलाचार्यलिंगाद्यैर्विवादं नाचरेत्सर्वशुद्धिषु पुरुषस्यार्थशुद्धिः स्त्रीशुद्धिरन्नशुद्धिश्च श्रेष्ठतमा स्यात्। द्रव्येषु रत्नसौवर्ण-

---

१ ॰च्छिष्टन्निष्पेषान्न Vi; My is defective.

२ ॰तारान् Vi My.

३ ॰बोधयति instead of ॰धयेत् Ed Tri.

४ यावत्तल्ले (यावल्ले)पगंधंमनश्शंका न स्युस्ताव॰ Vi My; यावल्लेपगन्धेन शङ्का न स्यात्ताव॰ Tri.

५ Thus Tri and Ed (only वेदं instead of वेदान् and विद्वांसं ब्राह्मणं च instead of विद्वद्ब्राह्मणान्); देवराजगुरु॰ Vi My.

रजतमयान्यद्भिः[1] शोधयत्यग्नौ वा स्पर्शयति[2] । ताम्रत्रपुसीसायसाद्यान्यम्लवारिभिर्दारुदन्तजातानि तक्षणाद्भावनाद्वा यज्ञपात्राणि दक्षिणपाणिना मार्जनात्क्षालनाद्वा संशोध्यानि । ॥ ३ ॥

चर्ममयसंहतानि[3] वस्त्राणि शाकमूलफलानि च प्रोक्षयेदल्पानि क्षालयेत् । घृतादीनि द्रव्याण्युत्पूयोल्कया दर्शयेत्कौशेयाविकान्यूषैरंशुपट्टानि[4] श्रीफलैः शङ्खशुक्तिगोशृङ्गाणि सर्षपैः सवारिभिर्मृन्मयानि पुनर्दाहेन गृहं मार्जनोपलेपनाभ्युक्षैर्भूमिं खननादन्यमृत्पूरणगोवासकाद्यैर्मार्जनाद्यैश्च शोधयेद्गोतृप्तिकरं भूगतं तोयं दोषविहीनं सुपूतं । वाक्शस्तं वारिनिर्णिक्तमदृष्टं[5] । योषिदास्यं कारुहस्तः प्रसारितपण्यं च सर्वदा शुद्धं । शकुन्युच्छिष्टं फलमनिन्द्यं । मशकमक्षिकानिलीनं तद्विप्रुषश्च न दूष्याणि । वाय्वग्निसूर्यरश्मिभिः स्पृष्टं च मेध्यमातुरे बाले पचनालये च शौचं न विचारणीयं यथाशक्ति स्याद्विण्मूत्राभ्यां बद्धापो न दूष्याः । परस्याचामतस्तोयबिन्दुभिर्भूमौ निपत्योद्गतैः पादस्पृष्टैराचामयन्नाशुचिः[6] स्यात् । ॥ ४ ॥

---

१ रत्नानि सौव॰ Tri Vi My; these three ins. ताम्र after रजत ।

२ स्पर्शयेत् Tri Ed.

३ चर्ममयं संहि॰ Vi My.

४ ऊषैर् is my conjecture (cp. Manu V. 120); अरुष्करै॰ Ed; अकुष्करै॰ Vi; अकुष्मरै॰ My; ऊषरै॰ Tri.

५ अदुष्टं instead of अदृष्टं Tri, but cp. Manu V. 127.

६ ॰राचमय॰ Ed Vi; ॰राचामय॰ My; Tri corrupt.

वानप्रस्थो नित्यस्वाध्यायी कुशेध्मादीनग्न्यर्थं शाकमूलफलान्यशनार्थं[१] च शुचौ जातान्याहरेदन्याधीनमन्योत्सृष्टमशुचौ[१] जातं गोरसं च वर्जयेत्। धान्यधनसंचयं न कुर्वीत। वस्त्रं नाच्छादयेत्। मधूक्ते तोयं मांसोक्ते पैष्टिकं गृह्णाति। सर्वभूतेषु दयालुः समः[२] क्षान्तः[२] शुचिर्निरस्तूथकः सुखे निःस्पृहो मङ्गल्यवाणीर्ष्याकार्पण्यवर्जी[३] मत्स्यादीन्दंशकान्सीरकृष्टजातानि कन्दमूलफलशाकादीनि च त्यजञ्जटाश्मश्रुरोमनखानि धारयंस्त्रिकालस्नायी धराशयो[४] वन्यैरेव चरुपुरोडाशान्निर्वपेत्पलाण्ड्वादीन्निर्यासं[५] श्वेतवृन्ताकं सुनिषण्णकं श्लेष्मातकं भजकलिं[६] चित्रकं[७] शिग्रुं भूस्तृणं कोविदारं मूलकं[८] च वर्जयति। मुनेः सर्वं मांसं गोमांसतुल्यं धान्याम्लं[९] सुरासमं भवति। पूर्वसंचिताशनं पूर्वाणि वसनान्याश्वयुजे मासि त्यजति। वेदवेदान्तेन ध्यानयोगी तपः समाचरति। अपत्नीको ऽनग्निरदारो ऽनिकेतनो वृक्षमूले वसन्वनस्थाश्रमेषु गृहस्थानां गृहेषु

---

१ ०फलादीनशनार्थं च शु० जातानाहरेत्, etc. Ed and partly Tri. —उत्कृष्टम् instead of उत्सृष्टम् Vi My.

२ क्षमः शान्तः Vi My.

३ मङ्गल्यवानीर्ष्या (!) Ed Tri.

४ धरशायी Vi My.

५ ०पुरोडाशान् Ed Tri; ०पुरोडाशं My; ०पुरोडाशादीन् Vi.

६ Thus Ed Vi; हजकलिं My; हञ्जकं (?) Tri.

७ Thus Ed Tri; चित्राकं Ed; चित्रांकं Vi My.

८ मूलकन्दं Ed.

९ ध्यान्यं Vi My.

वा भिक्षां भिक्षित्वाम्बुपार्श्वे शुद्धे पर्णे प्राणयात्रामात्रमन्नं भिक्षुवदश्नाति[1]। शरीरं शोषयन्नुत्तरमुत्तरं तीव्रं तपः कुर्यात्। ॥ ५ ॥

भिक्षुः स्नात्वा नित्यं प्रणवेनात्मानं तर्पयेत्तेनैव नमस्कुर्यात्। षडवरान्प्राणायामान्कृत्वा शतावरां सावित्रीं जप्त्वा सन्ध्यामुपासीत। अप्पवित्रेणोत्पूताभिरद्भिराचामेत्काषायधारणं सर्वत्यागं मैथुनवर्जनमस्तैन्यादीनप्याचरेत्। असहायो ऽनग्निरनिकेतनो निःसंचयी[2] समानावमानसमो विवादक्रोधलोभमोहानृतवर्जी ग्रामाद्बहिर्विविक्ते मठे देवालये वृक्षमूले वा निवसेत्। चातुर्मास्यादन्यत्रैकाहादूर्ध्वमेकस्मिन्देशे न वसेद्वर्षाः शरच्चातुर्मास्यमेकत्रैव वसेत्। त्रिदण्डे काषायाप्पवित्रादीन्योजयित्वा कण्ठे वामहस्तेन धारयन्दक्षिणेन भिक्षापात्रं गृहीत्वैककाले विप्राणां शुद्धानां गृहेषु वैश्वदेवान्ते भिक्षां चरेत्। भूमौ वीक्ष्य[3] जन्तून्परिहरन्पादं न्यसेदधोमुखस्तिष्ठन्भिक्षामालिप्सेत। ॥ ६ ॥

गोदोहनकालमात्रं तदर्धं[4] वा[4] स्थित्वा व्रजेदलाभे ऽप्यवमाने ऽप्यविषादी लब्धे संमाने ऽप्यसंतोषी स्यात्। द्रुतं विलम्बितं वा न गच्छेत्। भिक्षाकालादन्यत्र परवेश्म न गन्तव्यं। भिक्षितुं क्रोशादूर्ध्वं न गच्छेत्। भिक्षां चरित्वा तोयपार्श्वे

१ भिक्षुरश्नाति Vi My.
२ ऽसञ्चयी Vi My.
३ निवीक्ष्य Tri only.
४ Thus Vi My ; तदर्थं वा Ed ; तदर्थं Tri

प्रक्षालितपाणिपाद आचम्योदु त्यमित्यादित्यायातो[1] देवा इति विष्णवे ब्रह्म जज्ञानमिति ब्रह्मणे च भिक्षाग्रं दत्त्वा सर्वभूतेभ्य इति बलिं प्रक्षिपेत्प्राणाग्निहोत्रविधानेनात्मयज्ञं[2] संकल्प्य प्राणयात्रामात्रमष्टौ ग्रासान्वाश्नीयात्कामं नाश्नाति । वस्त्रपूतं जलं पीत्वाचम्याचामति । निन्दाक्रोशौ न कुर्वीत । बन्धून्ज्ञातींस्त्यजेद्ब्रह्मचारित्रं तपः श्रुतं न वदेत्सङ्गं त्यक्त्वा नियमयमौ[3] प्रियं[3] सत्यं वदन्सर्वभूतस्याविरोधी समः सदाध्यात्मरतो ध्यानयोगी नारायणं परं ब्रह्म पश्यन्धारणां धारयेदक्षरं ब्रह्माप्नोति । नारायणः[4] परं[4] ब्रह्मेति श्रुतिः ॥ ७ ॥

संन्यासिनोऽनाहिताग्नेर्देहं मृतं पुत्रोऽन्यो वा तृणैरन्तरीकृत्य शुद्धैर्ब्राह्मणैर्यन्त्रेण वा संनिधाय[5] समुद्रगाम्यां[6] नद्यां[6] तीरे[6] वा सैकते देशे सृगालादिभिरस्पृश्यं[7] यथा तथावटं खनति । गायत्र्या स्नापयित्वा तया तत्रासयित्वा शाययित्वा वा दक्षिणे हस्ते वैष्णवैर्मन्त्रैस्त्रिदण्डं संन्यस्य सव्ये यदस्य पारे रजस इति शिक्यमप्पवित्रमुदरे सावित्र्या भिक्षापात्रं गुह्यप्रदेशे भूमिर्भूमिमिति काषायं मृद्धरणौ

---

१ आदित्यम् instead of आदित्याय Vi My.

२ प्र before क्षिपेत् om. Vi My.

३ नियमप्रियं Vi My.

४ नारायणपरं all, but cp. TĀ. X. 11. 1 (page 824 of the Calcutta ed.).

५ Thus Vi My ; संनीय Ed ; संनिधौ Tri.

६ समुद्रगाया नद्यास्तीरे वा Ed Tri.

७ अस्पृष्ट्वा instead of अस्पृश्यं Vi My.

कमण्डलुं च संन्यस्य पिदध्यात्। तस्मिञ्छृगालादिभिः स्पृष्टे तत्कर्ता पापीयान्भवति। आहिताग्नेरग्नीनात्मन्यारोप्य संन्यासिनो मृतं देहं गायत्र्या स्नापयित्वा पूर्ववद्वाहयित्वा शुद्धे देशे निधाय लौकिकाग्नौ[१] तदग्निमुपावरोहेत्यवरोप्य[१] पवित्रं त इति घृतक्षीरमास्ये प्रक्षिप्य पूर्ववत्त्रिदण्डादीन्विन्यस्य[२] ब्रह्ममेधेन पितृमेधेन वाहिताग्निमन्त्रैस्तदग्निभिर्दहनमाचरति। तयोराशौचोदकबलिपिण्डदानैकोद्दिष्टादीन्नैव[३] कुर्यात्। नारायणबलिं करोति[४]। तद्दहनं खनित्वा पिधानं दहनं नारायणबलिं वा यः कुर्यात्सो ऽश्वमेधफलं समाप्नुयात्[५]। ॥ ८ ॥

नारायणबलिं नारायणादेव सर्वार्थसिद्धिरिति ब्राह्मणाद्यैर्नरैर्हतस्यात्मघातिनो रज्जुशस्त्रोदकाशनिदंष्ट्रिपशुसर्पादिभिः सर्वपापमृतस्यादाह्यानामन्येषां भिक्षोस्त्वैकादशदिनादूर्ध्वं महापातकिनां पश्चानां द्वादशसंवत्सरादूर्ध्वं[६] सपिण्डीकरणस्थाने मृतकार्यमपरपक्षे द्वादश्यां श्रवणे वा करोति। पूर्वे ऽहनि द्वादश ब्राह्मणान्निमन्त्रयेदपरे ऽहनि विष्णोरालयपार्श्वे नदीतीरे गृहे वाग्न्यायतनं कृत्वाघारं जुहुयादग्निं परिस्तीर्याग्नेर्वायव्यां विष्टरे दर्भेषु तद्रूपं सुवर्णं वा संस्थाप्य पुरुषं

---

१ Thus Ed Tri; लौकिकाग्निमुपाव॰ Vi My.

२ ॰त्रिदण्डादिविन्यस्य Tri; त्रिदण्डं instead of त्रिदण्डादीन् Vi My.—विन्यस्य Tri, संन्यस्य Vi My; विसृज्य Ed.

३ एतयो॰ instead of तयो॰ Ed; पिण्ड in Ed only; ॰दीनिनैव Vi My.

४ कुरुते Vi My.

५ सम् om. Vi My.

६ पञ्चदशसं॰ Vi My.

ध्यायन्नों भूः पुरुषमित्याद्यैः प्राङ्मुखं देवं नारायणमावाह्यासनपाद्याचमनानि दद्यात् । पुरुषसूक्तेन स्नापयित्वा नारायणाय विद्महे इत्यष्टाक्षरमन्त्रेण वा वस्त्रोत्तरीयाभरणपाद्याचमनपुष्पगन्धधूपदीपाक्षताचमनैरर्चयति । ॥ ९ ॥

केशवाद्यैर्द्वादशनामभिरद्भिस्तर्पयेत् । अग्निं परिषिच्य सहस्रशीर्षाद्यैर्विष्णोर्नुकाद्यैर्द्वादशनामभिश्चाज्यं चरुं[1] जुहुयात् । गुडाज्यफलयुक्तं[2] पायसं हविर्विष्णुगायत्र्या देवेशाय निवेद्य पाद्याचमनमुखवासं[3] दद्यात् । अग्नेर्दक्षिणे दर्भेषूत्तराग्रेषु दक्षिणाद्यर्चयित्वा[4] नारायणाय सहस्रशीर्षाय सहस्राक्षाय सहस्रपादाय परमपुरुषाय परमात्मने परंज्योतिषे परब्रह्मणे ऽव्यक्ताय सर्वकारणाय यज्ञेश्वराय यज्ञात्मने विश्वेभ्यो देवेभ्यः सर्वाभ्यो[5] देवताभ्यः[5] साध्येभ्य इत्येतैर्नम इत्यन्तैः पायसं[6] बलिं दत्त्वाज्यमेभिर्जुहोति । ब्राह्मणान्यादौ प्रक्षाल्य नवानि वस्त्रोत्तरीयाभरणानि दत्त्वा पुष्पाद्यैः पूजयित्वा द्वादशमूर्तिं ध्यायन्नुपदंशघृतगुडदधिफलयुक्तं श्वेतमन्नं भोजयित्वा यथाशक्ति सुवर्णं[7] दक्षिणां[7] ददाति । सहस्रशीर्षाद्यैः स्तुत्वा द्वादश-

---

१ Vi My om.

२ ०फलसंयुक्तं Vi My.

३ पानीय instead of पाद्य Vi My.

४ ? दक्षिणाद्यासयित्वा Vi My.

५ सर्वेभ्यो देवेभ्यः Vi My.

६ Vi My om.

७ सुवर्णद० Vi My.

नामभिः प्रणमेदन्तहोमं जुहोत्यभीष्टां परां गतिं स[1] गत्वा विष्णोर्लोके[2] महीयते। ॥ १० ॥

चातुर्वर्ण्यसंकरेणोत्पन्नानामनुलोमप्रतिलोमान्तरालव्रात्यानामुत्पत्तिं[3] नाम वृत्तिं चोर्ध्वजाताद्धोजातायां जातो ऽनुलोमो। ऽधरोत्पन्नादूर्ध्वजातायां जातः प्रतिलोमस्ततो ऽनुलोमादनुलोम्यां जातो ऽन्तरालः। प्रतिलोमात्प्रतिलोम्यां जातो व्रात्यो भवति। ब्रह्मणो मुखादुद्भूता ब्राह्मणा ब्राह्मण्यश्च ब्रह्मर्षयः पत्न्यो बभूवुस्तेषां गोत्रोत्पन्नाद्ब्राह्मण्यामसगोत्रायां[4] विधिना समन्त्रकं गृहीतायां जातो ब्राह्मणः शुद्धो भवेत्। विधिहीनमन्यपूर्वायां मृतभर्तृकायां गोलको जीवभर्तृकायां कुण्डश्च विप्रौ द्वौ निन्दितौ स्यातां। तस्मादधो बाहुभ्यामुत्पन्नात् क्षत्रियात् क्षत्रियायां विधिवज्जातः क्षत्रियः शुद्धस्तयोरविधिकं[5] गूढोत्पन्नो[6] ऽशुद्धो भोजाख्यो नैवाभिषेच्यः पट्टबन्धो राज्ञः सैनापत्यं करोति। शुद्धाभावे ऽपट्टबन्धो[7] नृन्यायात्तद्वृत्तं[8] राजवत्स्यात्। अधस्तादूरुभ्यामुत्पन्नाद्वैश्या-

---

१ Ed om.

२ विष्णुलोके Tri.

३ चातुर्वर्णानां संकरोत्पन्नानामनुप्रतिलो॰ Vi My.

४ Ed ins. ब्राह्मणाद् before ब्राह्मण्याम्।

५ Thus Ed; अधिकं instead of अवि॰; अप्यधिकं Vi My.

६ गुण्ढोत्पन्नो Vi My.

७ ॰बद्धो Ed.

८ नृपाया॰ Vi My; Tri useless.

द्वैश्यायां तथा वैश्यः शूद्रो। विधिवर्ज्जं मणिकारो ऽशूद्रो मणिमुक्तादिवेधः[1] शङ्खवलयकारी[1] स्यात्। ॥ ११ ॥

अथ पञ्चमादुत्पन्नाच्छूद्राच्छूद्रायां न्यायेन शूद्रः शुद्धः। जारान्मालवको निन्दितः शूद्रो ऽश्वपालो ऽश्वतृणहारी चैत्येते चातुर्वर्णिकास्तेषामेव संकरेणोत्पन्नाः सर्वे ऽनुलोमाद्याः। ब्राह्मणात् क्षत्रियकन्यायां जातः सवर्णो ऽनुलोमेषु मुख्यो। ऽस्य वृत्तिराथर्वणं कर्माश्वहस्तिरथसंवाहनमारोहणं[2] राज्ञः सेनापत्यं चायुर्वेदकृत्यं[3]। गूढोत्पन्नो ऽभिषिक्ताख्यो। ऽभिषिक्तश्चेन्नृपो भूयादष्टाङ्गमायुर्वेदं भूततन्त्रं[4] वा संपठेत्तदुक्ताचारो[5] दयायुक्तः सत्यवादी तद्विधानेन सर्वप्राणिहितं कुर्यात्। ज्योतिर्गणनादिकाधिकवृत्तिर्वा[6]। विप्राद्वैश्यायामम्बष्ठः कक्ष्याजीव्याग्नेयनर्तको[7] ध्वजविस्रावी[7] शल्यचिकित्सी। जरात्कुम्भकारः कुलालवृत्तिर्नापितो नाभेरूर्ध्ववप्ता च। क्षत्रियाद्वैश्यायां मद्गुः श्रेष्ठित्वं प्राप्तो महानसाख्यस्य वैश्यवृत्तिः चात्रं[8] कर्म[8] नाचरति। गूढादाश्विको ऽश्वक्रयविक्रयी स्यात्[9]। ॥ १२ ॥

१ °वेधशङ्ख° Ed ; Vi My wholly corrupt.
२ °संवहन° Ed only.
३ Tri Ed ins. वा।
४ भूतन्त्रं Vi My.
५ सुपठे° Vi My.
६ °धिका वृत्ति° Tri Vi My.
७ कक्ष्याजीवाग्नेयेन नवर्तको ऽध्वजविस्राव Vi My.
८ चात्रकर्म Tri.
९ Vi My om.

विप्राच्छूद्रायां पारशवो भद्रकालीपूजनचित्रकर्माङ्गविद्यातूर्यघोषणमर्दनवृत्तिर्जारोत्पन्नो[१] निषादो व्याडादिमृगहिंसाकारी । राजन्यतः शूद्रायामुग्रः सुदण्ड्यदण्डनकृत्यो । जाराच्छूलिकः शूलारोहणादियातनाकृत्यो । वैश्यतः शूद्रायां चूचुकः[२] क्रमुकताम्बूलशर्करादिक्रयविक्रयी[३] । गूढात्कटकारः कटकारी चेति । ततो ऽनुलोमादनुलोमायां जातस्यानुलोमः पितुर्मातुर्वा जातिं वृत्तिं भजेत । क्षत्रियाद्विप्रकन्यायां मन्त्रवज्जातः[४] सूतः प्रतिलोमेषु मुख्यो ऽयं मन्त्रहीनोपनीतो द्विजधर्महीनो । ऽस्य वृत्तिर्धर्मानुबोधनं राज्ञो ऽन्नसंस्कारस्य । जारेण मन्त्रहीनजो रथकारो द्विजत्वविहीनः शूद्रकृत्यो ऽश्वानां पोषणदमनादिपरिचर्याजीवी[५] । वैश्याद्ब्राह्मण्यां मागधः शूद्रैरप्यभोज्यान्नो ऽस्पृश्यः सर्ववन्दी प्रशंसाकीर्तनगानप्रेषणवृत्तिर्गूढाच्चक्री लवणतैलविक्रेता[६] स्यात् । ॥ १३ ॥

वैश्यान्नृपायामायोगवस्तन्तुवायः पटकर्ता वस्त्रकांस्योपजीवी । गूढाचारात्पुलिन्दो ऽरण्यवृत्तिर्दुष्टमृगसत्त्वघाती । शूद्रात् क्षत्रियायां पुल्कसः कृतकां वार्क्षीं वा सुरां हृत्वा पाचको विक्रीणीत । चोरवृत्ताद्वेलवो जम्भननर्तनगानकृत्यः[७] ।

---

१ पूजा instead of पूजन Vi My.
२ Thus Ed Tri ; चूचकः Vi My.
३ Thus Vi My ; ०ताम्बूलशाककाष्ठादिक्रय० Ed Tri.
४ मन्त्रवर्जिताः Vi My.
५ दमन only in Ed.
६ Thus Tri ; लवणाकीर्णविक्रेता Ed ; लवणत्रिवर्णक्रेता ( ! ) Vi My
७ जमननर्तन० Vi My.

शूद्राद्वैश्यायां वैदेहकः शूद्रास्पृश्यस्तैरप्यभोज्यान्नो वन्यवृत्तिरजमहिषगोपालस्तद्रसान्विक्रयी। चौर्याच्चक्रिको लवणतैलपिण्याकजीवी। शूद्राद्ब्राह्मण्यां चण्डालः सीसकालायसाभरणो वर्ध्राबन्धकण्ठः कक्षे झल्लरीयुक्तो यतस्ततश्चरन्सर्वकर्मबहिष्कृतः पूर्वाह्णे ग्रामादौ वीथ्यामन्यत्रापि मलान्यपकृष्य बहिरपोहयति। ग्रामाद्बहिर्दूरे स्वजातीयैर्निवसेत्। मध्याह्नात्परं ग्रामे न विशत्ययं। विशेच्चेद्राज्ञा वध्यो। ऽन्यथा भ्रूणहत्यामवाप्नोत्यन्तरालव्रात्यास्तु[१]। चूचुकाद्विप्रायां[१] तक्षको ऽस्पृश्यो झल्लरीहस्तो दारुकारः सुवर्णकारो ऽयस्कारः कांस्यकारो वा। क्षत्रियायां मत्स्यबन्धुर्मत्स्यबन्धी। वैश्यायां सामुद्रः[२] समुद्रपण्यजीवी मत्स्यघाती च स्यात्॥ १४॥

अम्बष्ठाद्विप्रायां नाविकः समुद्रपण्यमत्स्यजीवी समुद्र लङ्घनान्नावं प्लावयति। क्षत्रियायामधोनापितो नाभेरधो रोमवप्ता। मद्गोर्विप्रायां वेणुको वेणुवीणावादी। क्षत्रियायां कर्मकरः कर्मकारी[३]। वैदेहकाद्विप्रायां चर्मकारश्चर्मजीवी। नृपायां सूचिकः सूचीवेधनकृत्यवान्[४]। आयोगवाद्विप्रायां ताम्रस्ताम्रजीवी। नृपायां खनकः खननजीवी। खननान्नृपायामुद्बन्धकः शूद्रास्पृश्यो वस्त्रनिर्णेजकः। पुल्कसाद्विप्रायां रजको वस्त्राणां रजोनिर्णेजकश्चण्डालाद्विप्रायां श्वपचः

१ Thus Ed ; व्रात्याच्चूचुका॰ Tri ; ॰वृत्तिश्च चूचका॰ Vi My.
२ सामुद्री Ed.
३ कर्मारकारी Ed.
४ वेध instead of वेधन Tri.

चण्डालवच्चिह्नयुक्तो नित्यनिन्द्यः सर्वकर्मबहिष्कार्यो नगर्यादौ मलापोहकः श्मशाने वसन्देयपात्रग्राही प्रेतमबन्धुकं[1] विसृजेत् । वध्यान्हत्वा तद्वस्त्रादिग्राही[2] पराधीनाहारो भिन्नपात्रभोजी श्वमांसभक्षी चर्मवारवाणवाणिज्यकारी[3] स्यात् । तस्मान्निकृष्टे सुते समुत्पन्ने पतितो नष्टो घोरान्नरकान्व्रजति । सत्पुत्रो नरकेभ्यस्त्रायकः पितॄन्पावयित्वा शुभांल्लोकान्नयति । तस्माद्ब्राह्मणाद्याः[4] सवर्णायां विधिवत्पुत्रमुत्पादयेयुरिति विखनाः[5] । ॥ १५ ॥

## गृह्ये दशमो धर्मे तृतीयः प्रश्नः समाप्तः ।

१ Thus Vi My ; प्रेतबन्धकं Ed Tri.
२ तद्वस्त्रादीन् गृह्णीयात् Ed Tri.
३ गृहद्वारवाणिज्यकः Ed.
४ ततो instead of तस्मात् Tri Vi My.
५ विखनाः only given My Tri Ed.

